




श्रीगणेशाय नमः

श्रीगुरुभ्यो नमः

# श्रीशिवरहस्याख्यः महेतिहासः
# हराख्यः तृतीयांशः

व्यासमुनि संवादः

शिवपादारविन्दश्रीर्याश्रियं श्रीपतिं विधिम् ।
इन्द्रं चन्द्रं सुराननन्यानुत्पादयति सा शिवा ॥ १ ॥

रा नैमिषमाश्रित्य मुनयश्शौनकादयः । सूतं वेदार्थतत्वज्ञं प्रणम्योचुः प्रयत्नतः ॥२॥

ऋषयः—

द्वेदान्ततत्वज्ञ शिवज्ञानैकजीवन । शिवतत्वं वदास्मभ्यं शिवस्थानं श्रुतिश्रुतम् ॥३॥
त्र सर्वसुखावाप्तिर्यत्रापत्सङ्घवारणम् । सन्निधानं महेशस्य भक्तानुग्रहसाधनम् ॥४॥
ाम्भवानामभीष्टार्थास्सर्वे सिध्यन्ति यत्र वै । अनायासेन सततं प्रसन्नः पार्वतीपतिः ॥
त्र तीर्थानि रम्याणि पापनाशकराणि च । धर्मप्रवृत्तिदं लिङ्गं शाङ्गं मङ्गलदायकम् ॥
ताद्दशं स्थलं कुत्र त्रिणेत्रस्यापि सम्मतम् । तद्विचार्यातियत्नेन वद प्रीतिंपुरस्सरम् ॥
वया क्षेत्राणिदृष्टानि विचित्राणिवहून्यपि । तेषु किं सिद्धिदंक्षिप्रं विरूपाक्षप्रियश्च किम्

---

१, धर्मप्रवृद्धिदमिति पाठः ।

इति तन्मुनिवाक्यानि श्रुत्वा रम्याणि सादरम्। तानुवाच मुनिर्ध्यात्वा हर्षनिर्भरमान

सूतः—

साधुसाधु महाभागाश्शुद्धचित्तास्तपस्यया। भवद्दर्शनमात्रेण प्रसन्नमधुना मनः॥१

भाग्यवन्तो भवन्तोऽपि भवलिङ्गार्चनप्रियाः। भवतां सन्निधानेन भवे भक्तिः प्रजायते

सत्सङ्गो दुर्लभो लोकेसन्तश्शाम्भवपुङ्गवाः। शाम्भवानांमहाभाग्यं लोकेनास्त्यत्रतत्त्व

शाङ्गसङ्गाभिवाञ्छापि मम जाता पुरा शुभा। सा तावदद्य फलिता भवदागमनादिह

शाम्भवागमनं भाग्यैर्जन्मजन्मान्तरार्जितैः। भवतीति श्रुतं पूर्वं वसिष्ठादिकवाक्यतः

शाम्भवत्वञ्चविज्ञातं भवत्सु वहुसाधनैः। तानि तावत्साधनानि पुण्यकोट्यार्जितानि हि

उद्धूलनं त्रिपुण्ड्रञ्च रुद्राक्षाणाञ्च धारणम्। शिवलिङ्गार्चनञ्चेति तपःफलमनुत्तमम्॥१

यत्र शाम्भवपादाब्जरजोलेशः पतिष्यति। तत्तावदुत्तमं तीर्थं तत्र शङ्करसन्निधिः॥१

तत्रैव धर्मास्सर्वेऽपि सर्वाभीष्टफलप्रदाः। शाम्भवानां सन्निधाने कृतं पुण्यं तदक्षयम्॥१

न यत्र पापसम्बन्धस्सर्वसंपत्समागमः। तत्र शाम्भवसङ्गश्चेत्किमिष्टं नहि सिध्यति॥१

दुराद्दृष्ट्वा शाम्भवानां पादाम्बुजमजादयः। प्रणमन्ति प्रस्तुवन्ति प्रार्थयन्ति तदागम

आगते शाम्भवे गेहं नृत्यन्ति पितरस्सुराः। तदासनप्रदानेन स्वर्गलोकपतिर्भवेत्॥२

भक्त्या तच्चरणाम्भोजं प्रक्षाल्य विमलैर्जलैः। पूतो भवति पुण्यात्मा निवृत्तः पापसङ्ग

यो भावचरणाम्भोजं शिरसा प्रणमेन्मुहुः। तंनमन्ति सुरास्सर्वे धन्योऽयमिति वादिन

त एव धन्याः पुण्याश्च ये शाम्भवपदार्चकाः। तत्पादजलपानेन पीयूषं पीतमेव हि॥

शिवलिङ्गाङ्कितन्दृष्ट्वा न नमेद्यः प्रमादतः। स तावत्पातकी लोके वेदवाह्यस्स एवहि

शिवबुध्या प्रपश्यन्ति शैवं शिवपरायणाः। शिवालयश्शैव एव किं पुनश्शिव एव सः

अनन्तजन्मपुण्यानां फलं शैवत्वमीरितम्। शैवं विलोक्य पुण्येन कस्सुखं नाप्नुयाद्भु

ये पूजयन्ति मनुजाश्शैवपूजकपूजकान्। ते पूज्यास्सर्वदेवानां मुनीनाञ्च विशेषतः।

अर्घ्यपाद्यादिकं यच्च सम्पादितमिहाधुना। तत्स्वीकृत्य कृतार्थं मां कुर्वन्तु शिवतत्परा

अद्यधन्योस्मिधन्योस्मिकृतार्थोऽस्मिशिवार्चकाः। शिवरूपाणिभवतांशरीराणीतिमन्मे

१. जन्मान्तरैरितैरिति पाठः। २. ईदृशमिति पाठः।

तानि शिवलिङ्गानि शरीराणि मुनीश्वराः। उत्तमान्येव लिङ्गानि शिवो यत्राधितिष्ठति
शिवाभिमानलिङ्गानि शैवगात्राणि तानि मे। पूजनीयानि यत्नेन विल्वपत्रादिभिर्मुदा॥
इत्युक्त्वातानिलिङ्गानि पूजयित्वा मुहुर्मुहुः। प्रणतःप्राञ्जलिस्सूतः प्रहृष्टस्स्थिरमानसः
तादृशं विलोक्यैव सूतं शाम्भवपुङ्गवाः। आनन्दाश्रुसमाकीर्णाः कृताञ्जलिपुटा जगुः

ऋषयः—

धन्योऽसिधन्योऽसि शिवभक्तिरियं त्वया। कथं प्राप्तापुराचीर्णं किंकिं पुण्यमनश्वरम्
केन पुण्यप्रभावेन भवता मङ्गलावहम्। मङ्गलापतिपादाब्जस्मरणं क्रियते वद॥३६॥

सूतः—

पुरा व्यासस्समागत्य केदारेश्वरसन्निधौ। केदारेश्वरमभ्यर्च्य स्थितस्सन्तुष्टमानसः॥
तदा शिवार्चनपरं व्यासं शिष्यगणावृतम्। प्रणम्योक्तं शिवज्ञानं कथं जातं तवेत्यपि॥
शिवाराधनासक्तश्शिवपञ्चाक्षरं स्मरन्। स्पृष्ट्वा विभूतिं लिङ्गञ्च केदारेशमुवाच माम्

व्यासः—

सूताधुना तत्वमेकं वक्ष्ये शैवं सनातनम्। रहस्यं परमं गुह्यमनाख्येयं विचक्षणैः॥४०॥
पश्यत्सु शैववर्येषु सर्वेष्वेतेषु सादरम्। रहस्यमुच्यते किञ्चित्त्वं भक्तोऽसि ममेत्यपि॥
यद्रहस्यं मया नोक्तं तदिदानीं मयोच्यते। गोपनीयं प्रयत्नेन शिवभक्तिपुरस्सरम्॥४२
शिवभक्तायवक्तव्यमातुराय विशेषतः। विलोक्य सर्वतो दिक्षु न यत्र स्वविरोधिनः॥
अशाम्भवाय सहसा न[1] वक्तव्यमिदं त्वया। अनाप्ताय न वक्तव्यं रहस्यमिति निश्चयात
शपथः क्रियतामत्र केदारेश्वरसन्निधौ। अशाम्भवाय सहसा न वदामीति निश्चयात्॥
निधानकुम्भं चोराय दुष्टाय हितं[2]मानसः। कः प्रयच्छति यत्नेन तं सम्पाद्य प्रयत्नतः॥
अन्ये निधानकलशा देयास्सन्तु कथञ्चन। अयं निधानकलशस्सर्वथादेय एव हि[3]॥४७

सूतः—

शृण्वन्त्वद्य भवन्तोऽपि मुनयश्शिवतत्पराः। प्रसङ्गादधुना शैवं रहस्यं रम्यमुच्यते॥
इदं भवद्भिर्यत्नेन गोपनीयं समाहितैः। रहस्यानामिदं तावद्रहस्यं शैवमुत्तमम्॥४९॥

---

१. नवदामीति निश्चयादिति पाठः। २. हितमात्मनः इति पाठः।

३. न इति पाठः।

यथा रत्नानि दिव्यानि गोपनीयानि यत्नतः । तथा रहस्यमप्येतद्गोपनीयं विशेषतः
रहस्यरत्नमित्येतत्प्रख्यातं वेदसंश्रुतम् । इदं रहस्यं वेदान्तं गोपनीयं महत्तरम् ॥५
मयापि श्रद्धया तावद्भवत्सु दयया परम् । रहस्यमुच्यते शैवमवक्तव्यमपि ध्रुवम् ॥५
रत्नान्यत्यन्तदिव्यानि प्रदेयानि कदाचन । इदं रहस्यं परमं न देयं शिवतत्पराः॥५
प्राणरक्षामणित्वेन प्रसिद्धमिदमादरात् । अतएव भवद्भिस्तु गोपनीयं विशेषतः ॥५
इदं रहस्यमित्युक्तं शिवेन गिरिजां प्रति । तया गुप्तमिदं पुण्यं भवान्या भक्तिपूर्वकम्
तया तावत्कुमाराय पृष्टया भक्तिपूर्वकम् । स्नेहेनोक्तं रहस्यं हि शैवं [1]वेदान्तसम्भव
तदुक्तं नन्दिकेशाय कुमारेण कदाचन । प्रणताय विनीताय कृताञ्जलिपुटाय च॥५
इदं नारायणायोक्तं नन्दिकेशेन धीमता । तत्पादपद्मरजसा संयुताय यतात्मने ॥५
इदं नारायणेनोक्तं चतुर्वक्त्राय धीमते । प्रणतायातिनम्राय सरस्वत्या सहान्वहम् ॥
ब्रह्मणा सनकादिभ्यः प्रोक्तमेतन्महत्तरम् । तैरुक्तं नारदायाद्य मद्यन्तेनोक्तमादरात्
अभ्यासार्थमिदं तावत्तद्विस्मरणशङ्कया । मया वक्तुं समारब्धं भवद्भ्यो मुनिपुङ्गवाः
अतएव प्रयत्नेन विनीताय हिताय च । भवद्भिरपि वक्तव्यं नान्यस्मै सर्वथा द्विजाः
इदं मत्प्रार्थितं तावत्कर्तव्यं नात्र संशयः । इदमेव वरं सत्यं ममेयं गुरुदक्षिणा ॥६३

ऋषयः—

यदुक्तं श्रीमता भक्त्या तत्सर्वं श्रुतमेव हि । हितायास्मभ्यमप्युक्तं त्वया तत्वविदां व
यद्गोपनीयं देवानां रहस्यं शाम्भवं मुने । तद्गोपनीयमस्माकं रत्नवन्नात्र संशयः॥६५
इदं कण्ठमणित्वेन रक्षणीयं विशेषतः । अस्मिन्नर्थे संशयोऽपि श्रीमता कार्य एव न ।
यद्रहस्यं पुरा नोक्तं श्रीमतापि त्वया मुहुः । पृष्टेनापि प्रयत्नेन रहस्यं [2]तदिहोच्यताम् ॥
इति श्रुत्वा मुनिवचो व्यासस्सन्तुष्टमानसः । रहस्य वुक्तुमुद्योगं चकार चतुरस्ततः ॥
प्रणम्य शिवमद्वैतं भस्मधारणपूर्वकम् । शिवलिङ्गमुपस्पृश्य पुनर्नत्वा महेश्वरम् ॥६९॥
आनन्दाश्रुसमाकीर्णस्तूर्णं गद्गदया गिरा । हृदि साम्बं स्मरन्नेव घोरसंसारशामकम्॥

व्यासः—

धन्या यूयं न सन्देहो भस्मभूषितविग्रहाः । शिवविद्यादानपात्रं त्रिणेत्रप्रियमीदृशम् ॥

१. वेदान्तसंस्तुतमिति पाठः । २. तदिहोच्यते इति पाठः ।

त्रे दत्तानि रत्नानि धनानि विविधानि च । सर्वसौख्यप्रदानीति श्रुतानि श्रुतिभिर्मुहुः
शिवविद्यादानपात्रं दुर्लभं भुवनेष्वतः । लब्धे पात्रे परित्यागः कथं कार्यं मनीषिभिः ।।
शिवविद्याप्रदानेन दातुः पात्रस्य च द्वयोः । तरणन्तु भवत्येव घोरसंसारसागरात् ।।७४

यत्रापारजरा[1]हरामरकथासिन्धुस्समुज्जृम्भते
तत्राम्बागणनाथषण्मुखयुतश्शम्भुस्स्वयं नृत्यति ।
विष्णुर्वेत्रकरश्चतुर्मुखमुखान्दूरीकरोत्यादरा-
न्नन्दीशोग्रकटाक्षवीक्षणभयग्रस्तस्समस्तान्सुरान् ॥ ७५ ॥

पदार्थमपि वा मुदा मदनमर्द्दना[2]नन्दन-
प्रसादनकथागतं कथमपि स्मृतं वा श्रुतम् ।
ददाति मुदमन्तकप्रणतमाशुतावत्करो-
त्यपारसुकृताम्बुधिमँ[3]वरसिद्धिवृद्धिं मुहुः ॥ ७६ ॥

पायात्सोऽयमलौकिकशिवकथागङ्गातरङ्गानिल-
श्श्रोतॄन्पावयतीति नाद्भुतमिदं तत्सन्ततिं तत्कुलम् ।
तत्पोष्यानपि पावयत्यनुदिनं नूनं सकृद्वा स्मृतः
किं वक्तव्यमनुक्षणं श्रुतिपथारूढो मृडानीपतेः ॥ ७७ ॥

गात्रश्रोत्रविशालनेत्ररसनाचित्तायुषामक्षया
वृत्तिः पुण्यवशेन तेन गणनाप्येषां परार्धाधिका ।
यद्यप्यस्तु तथापि शङ्करकथापीयूषसिन्धुस्फुर-
त्कोट्यंशांशविशेषतत्वकथनं शक्यं न सर्वात्मना ॥ ७८ ॥

द्राक्षेक्षुक्षीरसाराद्यतिरुचिररसास्वादनाख्यापनाद्यै-
रद्यालं कालकालश्रुतिकथितकथायूथपीयूषधाराम् ।
धीराकारप्रसारस्फुरदुरुसुरसासारधारानुरक्तां
व्यक्तां शक्ते विविक्ते पिब पिब रसने स्वादनामोदमाना ॥ ७९ ॥

---

१. हराजरामरकथेति पाठः ।
२. आनन्ददप्रसादद इति पाठः ।
३. प्रविरसार्धवृद्धा इति पाठः ।

वामे मेरुशरासनं हरिशरं सव्ये दधानं करे
संहर्तुं त्रिपुराणि भूवररथन्यस्ताग्रपादाङ्गुलिम् ।
आपादप्रणतामितामरशिरःकोटीररत्नप्रभा-
स्पर्धावर्धकपादुकार्धचरणं फालेक्षणं भावयेत् ॥ ८० ॥
वन्दे मेरुशरासनोरुशिखरज्याकारकाकोदरं
ग्रीवालङ्कृतवामपाणिचरणं नाराचनारायणम् ।
सव्याकुञ्चितपाणिना सकरुणं सम्भ्रामयन्तं पुरं[1]
जित्वा वीक्ष्य शिवां सहासममरस्त्रग्दृष्टितुष्टं[2] मुहुः ॥ ८१ ॥
प्रणामानम्रेन्द्रप्रमुखवनितायल्लकमणि-
प्रभास्पर्धामर्दामृतकरशिरोरत्नमहिला ।
मुहुर्दृष्ट्वा दृष्ट्वा निजचरणजाग्रच्छविकृता
स्मितव्यक्तानन्दा दिशतु मम कल्याणसरणिम् ॥ ८२ ॥
जाताश्शङ्करसुन्दरोदरदरीद्वारोर्वरास्वङ्कुरा-
स्सिक्ताश्शङ्करनामधेयसुधया सद्यः प्रवृद्धाः फलैः ।
आनम्राश्शिवनामलक्षणसुधायन्त्राभिलाषामुहुः
कूजन्त्यो रसनां रसैरभिनवां कर्तुं किमद्योन्नताः ॥ ८३ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे व्यासमुनिसंवादो नाम प्रथमोऽध्यायः ॥ १ ॥

---

व्यासमुनिसंवादे गायत्र्युपासनन्नाम द्वितीयोऽध्यायः.

ऋषयः—

शिवविद्या महाविद्याया विद्यामुक्तिदायिनी। तांविद्यां वेद वेदोवा गौरीवा शङ्करोऽथवा
कुमारोवागणेशोवानंदिकेशोऽपिवास्वयम्।यदिस्याद्गिरिजाकान्तेभक्तिरव्यभिचारिणी

---

१. सम्भावयन्तं पुरेति पाठः ।

२. सूग्दृष्टीति पाठः ।

दैव शिवविद्यायास्स्वरूपप्रवणो भवेत् । भक्तिरीशे तथा तावन्नकस्याप्यद्भुतं तपः ॥
शिवविद्याप्रभावज्ञो दुर्लभो भूतले मुने । यथाभक्तिर्महादेवे तव सा तपसा खलु ॥४॥
था क्वापि न दृष्टैव भक्तिरव्यभिचारिणी । भक्तिरन्नतया ख्याता सैव भक्तिर्महेश्वरे ॥
ा भक्तिर्मुक्तिदा नृणां संसारभयमोचनी । महादेवश्चिदाकारः परमानन्दनिर्भरः॥६॥
निर्गुणोऽपीति निर्णीतःपार्वतीपतिरित्यपि । चन्द्रचूड इति ख्यातस्त्रिपुरान्तक इत्यपि॥
मरारिरिति विख्यातः[1]कालकाल इतिस्मृतः । त्रिशूलपाणिस्सर्वेशो जटामण्डलमण्डितः
मार्धविग्रहत्वेन विख्यातः परमेश्वरः । अन्धकारिरितिख्यातो वृषभध्वज इत्यपि ॥
लिङ्गाकार इति ख्यातो भस्मोद्धूलितविग्रहः । रुद्राक्षभूपणश्शान्तो नीलकण्ठ इति स्मृतः
विरूपाक्ष इति ख्यातो दक्षो दाक्षायणीपतिः । कुमारगुरुरव्यक्तो व्यक्तस्सुन्दरविग्रहः॥
कामारिरिति विख्यातः कामदत्वेन कीर्तितः । अक्षरत्वेन विज्ञातो विज्ञानानन्दसागरः
ईश्वरः परमात्मा च परं ब्रह्म परात्परः । इत्यन्योन्यं विरुद्धं हि नाम शर्वे चिदात्मके॥
चिद्विलास इति ख्यातश्चिदित्यपि विशेषतः । इदं सर्वं वदास्मभ्यं शिवधर्मान्विशेषतः
द्धर्मश्रवणादेव तज्ज्ञानञ्च भविष्यति ॥ १५ ॥

व्यासः—

शृणुध्वं मुनयस्सर्वे भूतिधारणपूर्वकम् । हृदि ध्यात्वा महादेवं मङ्गलार्धाङ्गमव्ययम् ॥
शिवार्चनं परो धर्मस्सर्वधर्मोत्तमोत्तमः । तद्भिन्नधर्मास्सर्वेऽपि तदर्था एव केवलम्॥१७
शिवः परं परं ब्रह्म सच्चिदानन्द लक्षणम् । विज्ञान[3]घनमेवेदमानन्दघनमित्यपि॥१८॥
तन्निर्विकारं निर्लिप्तं तदाद्यन्तविवर्जितम् । ज्योतिस्स्वरूपममलं नामरूपविवर्जितम् ॥
अप्रमेय निर्गुणञ्च निरञ्जनमनामयम् । वाचामगोचरम्मन्ये मनसामप्यगोचरम्॥२०॥
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । वेदवेदान्तवचनैरशक्यं तन्निरूपणम्॥२१
पुराणानां का कथात्र वाङ्मार्गार्गलमेव तत् । अनर्गलप्रवाहाणां कथानामपिवाकथा ॥
वागगोचरमप्येतत्कथञ्चित्कृपया प्रभोः । शम्भोर्विषयतामाप ततस्तद्वचसामपि ॥२३॥
इदमप्युच्यते तावत्प्रेरितेन कथञ्चन । शिवेनैव मया विप्रास्स बुद्धिप्रेरकश्शिवः॥२४॥

१. विग्रहः इति पाठः । २. कालकण्ठः इति पाठः ।
३. घन एवेति सानन्दघन उच्यते इति पाठः ।

देवस्य सवितुर्बुद्धिं प्रचोदयति शङ्करः। स एव भगवान्भर्गो धियो यो नःप्रचोदयात्
देवस्य दीप्यमानस्य सवितुर्ज्ञानमुत्तमम्। प्रचोदयति विश्वात्मा वरेण्यं शिव एवसः
अन्यः को वा तद्वरेण्यं सवितुर्वा प्रचोदयात्। अस्माकमितरेषां वा सभर्गश्शङ्करस्स्
अस्य भर्गपदस्यैव माहात्म्यं श्रुतिषु श्रुतम्। संसारभर्जनाद्भर्गस्सोऽयं स्वर्गापवर्गदः
पुरा चकार गायत्री तपो घोरतरं परम्। प्रीतस्तत्तपसा शम्भुस्तद्भक्त्या परया तदा
ततः परं स भगवान्भर्गस्सर्गादिकारणम्। तामुवाचातिचतुरो घनगम्भीरया गिरा॥

सदाशिवः—

त्वया तप्तन्तपो घोरं कल्पानामयुतं ध्रुवम्। तेन प्रीतोऽस्म्यहं देवि वरंवृणुयथेच्छया
वरदेषु वरेण्योऽहं त्वदीप्सितवरप्रदः। किमदेयं ममास्त्यत्र प्रीतो वै तपसाधुना॥३

व्यासः—

इति तद्वचनं श्रुत्वा प्रणम्य भुवि दण्डवत्। गायत्री मूर्तिमासाद्य सानन्दाश्रुपरिप्लुता

गायत्री—

भगवन्देवदेवेश भर्ग संसारभर्जक। प्रसीदकरुणासिन्धो वरं देहिमदीप्सितम्॥३४
मन्त्रश्शिवपदाभावेजपायोग्यइतिश्रुतिः। प्रसिद्धासाश्रुतिस्तात्वन्मान्याधन्यस्यकेवल
मन्त्रे शिवपदं यत्र तेन सिद्धिः प्रजायते। अतो मुनीश्वरास्सर्वेशिवमन्त्रजपोत्सुकाः
शिवमन्त्रे विद्यमाने सर्वविद्या प्रकाशके। अविद्यानाशके तस्मिन्नन्यो मन्त्रो नजप्यते
व्यर्थायासप्रदा मन्त्राश्शिवशब्दविवर्जिताः। अतस्तैर्बहुधा जप्तैरल्पं वा न फलंध्रुवम्
नीरसैस्तरुभिः पुष्पं न फलं वा यथा तथा। शिवमन्त्रान्यमन्त्रेण प्रजप्तेनापि किं फल
किंवन्ध्या जरठापुत्रं सूतेविद्याविशारदम्। तथा मन्त्रास्तु तेवन्ध्याश्शिवनामविवर्जिताः
शिवनामस्वरूपेण दौहृदेन[1] महेश्वर। फलं मन्त्रतरुस्सूते भक्तिसिक्तः पुनः पुनः[2]॥४
शिवनामप्रवेशेन मन्त्रो भाति यथा रविः। उदयाचलमासाद्य सहस्रकिरणोऽपि सन्॥
महान्धकारेण रविर्यथा भाति तथा मनुः। शिवमन्त्राभावबद्धो न फलायोपयुज्यते॥
मन्त्राकारं दिनं भानुमपेक्ष्यासाद्य भासते। मन्त्ररूपदिनस्यायं भर्गशब्दस्तु भास्करः॥
दिनं न भास्कराभावे दिनत्वमपि यास्यति। यथा तथा मन्त्रतापि मन्त्रे तेन विना तु न

१. दोहदेनेति पाठः। २. पुनः इति पाठः।

दृष्टं शिवपदं पूर्वं त्वया तावन्महात्मना। तद्यत्र मन्त्रे न भवेत्स मन्त्रो जप्य एव न ॥
ण्ठे मङ्गलसूत्रश्चेत्सा नारी मङ्गलावहा। तथैव मन्त्रविद्यापि मङ्गलायतनं विना ॥
ावमन्त्रस्तु मन्त्राणां तावन्मङ्गलसूत्रवत्। जातो मङ्गलदानाय किमन्यैस्साधनैरपि॥
न्नभूषणयुक्तापि न रण्डा भाति सर्वथा। विना मङ्गलसूत्रेण तथा मन्त्रो न तं विना॥
तया क्रियते धेन्वा या न दोग्ध्री न गर्भिणी। शिवमन्त्रविहीनेन जप्तेन मनुनापि किम्
गौस्सगर्भा सापोष्या साधनैर्विविधैस्तथा। शिवमन्त्रेण संयुक्तो मनुर्जप्यो मनीषिभिः
ावमन्त्रात्मकं रत्नं मन्त्रः प्राप्य विराजते। यथा धरा रत्नगर्भा फलं सूते मनोहरम् ॥
तिव्रतापि या नारी पुत्रहीना न राजते। तथा शिवपदाभावे मन्त्रविद्या न राजते ॥
न्त्रो मन्त्रत्वमाप्नोति शिवमन्त्रप्रवेशनात्। तदभावे स मन्त्रस्स्यादमन्त्रः केवलश्शिव
हिमा शिवशब्दानां न ज्ञातुं शक्यते मया। वेदैरपि न विज्ञातो मुनिभिश्च सुरैरपि ॥
न्मन्त्रे जपयोग्यत्वं नास्तीति मुनिभिः प्रभो। न जपाय प्रयुक्तोऽयमतो दुःखमिदं मम
तद्दुःखविनाशस्तु त्वत्प्रसादं विना कथम्। त्वयि प्रसन्ने भगवन्नप्राप्यमपि किं प्रभो ॥
न्न वेदैरपि ख्यातं तव रूपं महेश्वर। तदद्य दृष्टं भगवन्प्रसीद परमेश्वर ॥ ५८ ॥

नमो नमस्तेऽस्तु महेश तुभ्यं नमो नमस्ते वृषभध्वजाय।
नमो नमस्ते गिरिजाधवाय विद्यास्वरूपाय नमो नमस्ते। ५९ ॥
नमो नमस्ते परमात्मने नमस्स्वर्गापवर्गप्रद भर्ग शम्भो।
भवत्पदाम्भोजविलोकनेन सुखाम्बुधिमेय्यतुष्टत्तिमाप ॥ ६० ॥
आपत्कुलं नष्टमनन्तमीश त्वत्पादपद्मार्पितचित्तवृत्तेः।
शुभास्पदत्वं समवाप्य शम्भो प्रसन्नचित्तोऽपि भवेन्नरोऽपि ॥ ६१ ॥
अणोरणीयान्महतो महीयानात्मा गुहायान्निहितोऽस्य जन्तोः।
तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥ ६२ ॥
उमासहायं परमेश्वरं विभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्।
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥ ६३ ॥
अव्यक्तरूपं परमात्मतत्वं न वेदवेदान्तपरिश्रमेऽपि।

१. अयं मनोदुःखमिति पाठः।

ज्ञेयं परन्त्वीश्वरपादपद्मप्रसादविज्ञेयमिति प्रमा मे ॥ ६४ ॥
नयत्स्वरूपं तव वेददृष्टं न दृष्टमीशान सुरैरपीदम् ।
मया परं भाग्यवशेन दृष्टं भाग्यस्य का वा भगवन्नियत्ता ॥ ६५ ॥
यत्पादपद्मस्मरणप्रवृत्ताः कृतान्तवार्तामतिदुस्सहां ताम् ।
विहायचानन्दजलाब्धिमग्नास्संसारतापैर्न च पीडितास्स्युः ॥ ६६ ॥
महेश्वरश्रीचरणारविन्दं निधाय चित्ताम्बुजकर्णिकायाम् ।
आनन्दधारावृतसच्छरीरास्सुराः प्रपश्यन्ति नरा न धीराः ॥ ६७ ॥
यदीक्षणं वा शिवपादपद्मं हृत्पद्मसंविष्टमतिप्रकृष्टम् ।
प्रकृष्ट एवातिनिकृष्टजन्माप्युत्कृष्टजन्मा स तु किं पुनस्स्यात् ॥ ६८ ॥
स्वर्गापवर्गप्रदमीश्वरं त्वां भजन्ति धन्याः परमन्तरायैः ।
विना विमुक्ताघपरम्परास्ते समस्तलोकेषु किलास्तिकास्ते ॥ ६९ ॥
अनन्तकल्याणपरम्परासु तिष्ठन्ति ते शङ्करपूजकास्ते ।
नापत्प्रपश्यन्ति कदापि धीरा धीरास्तएवेति विचारिताश्च ॥ ७० ॥
मयि प्रसादोऽपि कृतस्त्वयायं त्वत्पादसन्दर्शनदानरूपः ।
आनन्दकन्दोऽयमनुक्षणं मे सूते महानन्दनिधानमीश ॥ ७१ ॥
कारुण्यपूर्णाम्बुधिमीश्वरं त्वां स्मृत्वापि सन्तोषमहाब्धिपूर्णः ।
दृष्ट्वा भवन्तं भगवन्तमीश को वा न तृप्तस्तरसा सुखेन ॥ ७२ ॥
अनुक्षणं तस्य शुभानि शम्भो सुखानि सम्पज्जलराशयोऽपि ।
यस्यानपाया त्वयि भक्तिरीश सा तावदत्यन्तसुदुर्लभा न ॥ ७३ ॥
येनाप्रमादेन कृतोऽस्ति धर्मो महेशपादार्चनरूप एव ।
तस्यैव तद्भक्तिशुभप्रवाहस्सुदुर्लभः किं न सतामपीश ॥ ७४ ॥
शम्भो यथा भर्गपदप्रवेशो मन्त्रे मदीयेऽपि तथा प्रसादः ।
भवत्वयं मे भगवन्वरोऽस्य परत्वमित्येव मतिर्ममास्तु ॥ ७५ ॥

व्यासः—

इत्युक्तं तद्वचश्श्रुत्वा तथास्त्विति महेश्वरः । गायत्रीपूजिते लिङ्गे प्रविष्टो गणसंवृतः

यत्रीपूजितं लिङ्गं यः पूजयति सादरम् । स सर्वसिद्धिसम्पन्नस्सिद्धेषु प्रथितो भवेत् ॥
ा प्रभृति गायत्री जपयोग्या मुनीश्वराः । स्वर्गापवर्गदातृत्वाद्भर्गो भर्गत्वमागतः ॥
गायत्रीस्तवं पुण्यं महेशज्ञानपूर्वकम् । पठेज्जपफलं प्राप्य सिद्धमन्त्रो भविष्यति ॥
ादृशश्शिवः केन नार्चितो न नतो मुहुः । न ध्यातो न स्मृतः पुण्यैरपारैर्विविधैरपि ॥
वमन्त्रजपं कृत्वा शिवध्यानपुरस्सरम् । शिवं यान्ति शिवाचारास्सदाचाररतास्सदा
ाश्शिवपदाभावे मन्त्रो जप्यो न सर्वथा । शिवमन्त्रान्वितो मन्त्रो जपनीयः प्रयत्नतः
ोक्तत्वेन शब्दस्तु न जपायोपयुज्यते । न हि रासभशब्दस्य शुद्धस्य जपयोग्यता ॥
ां प्रसूनसहितं यथामौलिविभूषणम् । तथा शिवपदोपेतो मन्त्रः कण्ठविभूषणः ॥८४
क्केकान्ताकराक्रान्ताशिवमन्त्रजपैःपरम् । वेदाम्बुराशिस्सर्वोऽपि नालङ्कारायजायते
ाकरन्वं जलधेर्दिव्यरत्नान्वयात्परम् । किरीटयोग्यं तद्रत्नं तत्रत्यं न तृणं तथा ॥८६
ुद्रस्थत्वमात्रेण तत्रत्यास्सिकता अपि । केन वा शिरसा वाह्यास्तत्रत्या मणयो यथा ॥
वमन्त्रमणिस्तावद्वेदरत्नाकरे स्थितः । ग्राह्यो जपाय योग्यत्वात्तदन्यो ग्राह्य एव न ॥
लं किम्बहुनोक्तेन शिवशब्दः परात्परः । शिव एवेति विज्ञेयश्शिवलिङ्गञ्च तादृशम् ॥
वश्च शिवलिङ्गञ्च रुद्राक्षं सितभस्म च । शिवक्षेत्रञ्च भाग्येन लभ्यते मुनिपुङ्गवाः ॥
वोभूत्वा शिवंप्राप्य भस्मलिङ्गञ्च शाम्भवम् । शिवमन्त्रञ्चसम्प्राप्य मुच्यतेपापवन्धनात्

शैवा एव वयं विभूति विलसद्रुद्राक्षभूषाश्रयाः
पूज्यं नश्शिवलिङ्गमेव सततं ध्येयश्शिवः केवलम् ।
अस्मद्भाग्यवशेन भर्गपदभाङ्मन्त्रोऽपि पञ्चाक्षरो
रुद्राध्यायगतो जपाय विविधक्लेशप्रभङ्गाय च ॥ ९२ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे व्यासमुनिसंवादे गायत्र्युपासनन्नाम द्वितीयोऽध्यायः ॥ २ ॥

## नन्दिकेशागमनं नाम तृतीयोऽध्यायः.

सूतः—

ति तद्वचनं श्रुत्वा ते सर्वे मुनिपुङ्गवाः । आनन्दाश्रुप्रवाहाक्तास्संसक्ताश्शिवपूजने ॥
नः प्रणम्य तं व्यासं शिवतत्वोपदेशकम् । शिवतत्वोपदेशाय प्रेरयामासुरादरात् ॥२॥

१. प्रहाणायेति पाठः ।

मुनयः—

शिवः कथं पूजनीयश्शिवधर्माश्च के मुने। शिवाचाररताः के वा शिवः केन प्रसीद
शिवायै कुत्र वा प्रोक्तं रहस्यं शैवमुत्तमम्। तदावासस्वरूपञ्च कीदृशं मुनिपुङ्गव॥
तदावासस्य किं मानं तत्र केषामवस्थितिः। इदं सर्वं विशेषेण विचार्य वद सादरम्

व्यासः—

साधु पृष्टं मुनिश्रेष्ठाश्श्रीकण्ठार्चनतत्पराः। एतत्कथानुवादेन महानन्दः प्रवर्धते॥
सम्पदम्बुनिधिः प्राप्तो विनष्टाः पापपर्वताः। एतदर्थं पुरा प्राह जैगीषव्याय पृच्छते
तारकारिरुवाचेत्थं सन्तुष्टेनान्तरात्मना॥

जैगीषव्यः—

जगतां जननी गौरी कैलासे शङ्करान्तिकम्। कदागता वदास्मभ्यं स्कन्द शिक्षितता

स्कन्दः—

शृणुष्व जैगीषव्याद्य ह्यशेषैर्भूसुरैस्सुरैः। गायत्र्याश्च तपस्सिद्धिं देव्या यानं हिमाचल
शृणु कैलासगमनं गणानां प्रेषणं मुने। त्वाद्य कुशलप्रश्नैर्ममानन्दः प्रजायते॥ १०
महाशाम्भवसङ्गेन भवाब्धिरपि शुष्यति। शैवो धर्मोपदेशाय योग्यो भाग्यवतां वरः
अतश्शिवप्रभावोऽपि वर्णनीयो मयाधुना। सुमेरुतुङ्गशृङ्गेषु शृङ्गमेकमनुत्तमम्॥ १
तत्तुङ्गशृङ्गमस्त्यन्यत्तच्छृङ्गापेक्षया द्विजाः। तच्छृङ्गोपरि रत्नानां प्रासादःकश्चिदुत्तम
तत्प्रासादप्रभावोऽपि वेदानामप्यगोचरः। परार्धयोजनायामस्तावद्योजनमुन्नतः॥
दिगष्टकमपि व्याप्य दिगन्तेष्वपि तिष्ठति। न तत्प्रासादशृङ्गेषु सूर्यचन्द्रादिरश्मयः
सूर्यस्य तत्र का वार्ता चन्द्रस्यच मुनीश्वराः। तत्प्रासादप्रान्तदेशे नित्यपुष्पास्सुरद्रुमा
सुधाप्रवाहकल्लोलमणिकान्तिविराजिताः। प्रासादस्सोऽप्ययत्नेन नवरत्नविनिर्मितः
तद्रत्नकान्तिपूराणामन्त एव न सर्वथा। तत्प्रासादस्य मध्येऽपि कोटिशो मणिमण्टपाः
विचित्ररचनाबद्धाः कोटिशो मणिवेदिकाः। रत्नशृङ्गाणि तेष्वेव सङ्ख्याहीना मनोह
रत्नद्वाराणि तस्यैव विपुलान्यपि कोटिशः। न सूक्ष्मद्वारसङ्ख्यापि कदाचिदपि सर्वथा
कर्तुं न शक्यते नूनं कल्पान्तेऽपि सुरैरपि। रम्ये सुरतरोर्मूले [1]वेदिका च मनोरमा॥

१. मनोज्ञा मणिवेदिकेति पाठः।

तत्तरुप्रसूनानां समूहैः परिवारिता । समरन्दानि पुष्पाणि स्रवन्त्येव पुनः पुनः ॥
तासु सर्वासु सर्वत्र शिवलिङ्गानि सर्वशः । स्फुरत्स्फुलिङ्गरूपाणि तेजःपुञ्जमयान्यपि॥
न्मरन्दाभिषिक्तानि तत्पुष्पैः पूजितान्यपि। रत्नप्रासादकान्तीनां प्रवाहाःप्रचलन्तिये
राष्टृतानि लिङ्गानि कोटिशस्सर्वदा द्विजाः। तत्पुष्पगन्धवाहानां मन्दानामपि सुन्दरः
पर्शस्सुधातरङ्गाणामन्वयेन सुखावहः। तत्प्रासादो महाशृङ्गमणिमण्टपशोभया॥२६॥
पूषितानि भवन्त्येव शिवलिङ्गानि शाम्भवाः। एकैकस्मिन्द्वारदेशे गणास्सन्ति सहस्रशः
जोरूपाश्च ते तावत्प्रासादमणिकान्तिभिः। तत्रान्धकारवार्तापि न कदापि मुनीश्वराः
त्तेजःपुञ्जसङ्गेन दीपापेक्षा न जायते । सूर्यचन्द्राद्यपेक्षापि तत्रत्यानां न जायते ॥
रुद्रुमैश्च तत्रत्यैस्सुधाफलसमन्वितैः । गणास्तृप्ता भवन्त्येव सर्वदापि प्रतिक्षणम् ॥
तेषामशनापेक्षा गणानामपि सर्वथा । तत्प्रासादवरोत्तुङ्गशृङ्गमण्टपवेदिका॥ ३१ ॥
तत्र रत्नखचितं सिह्मासनमुमापतेः । कोटियोजनविस्तीर्णं कोटियोजनमुन्नतम् ॥
न्मन्दारतरुस्रस्तपुष्पमालाविराजितम् । तदुपर्यम्बिकाकान्तस्स्वतः कान्तः परात्परः
विष्टस्तेजसां राशिर्मनोवाग्विषयोऽपि न। क्षीरसागरसङ्काशपट्टकूलपरिच्छदः ॥
नानापरिमलद्रव्यदिव्यचन्दनचर्चितः। त्रिपुण्ड्रविलसत्फालो रुद्राक्षमणिभूषणः ॥
अनन्तरत्नसन्नद्धकन्धराभरणान्वितः । रत्नाङ्गदैश्च केयूरैर्मणिमण्डलमण्डितैः॥ ३६॥
मुक्ताहारैश्च विविधैर्भूषितो भूतिभूषणः । अमूल्यरत्नखचितैर्विविधैरङ्गुलीयकैः॥३७॥
सुरत्नकटिसूत्रेण विपुलेन विभूषितः । अपारचित्ररत्नौघकिरीटप्रभया युतः ॥ ३८ ॥
नानामणिसमाकीर्णकर्णभूषणभूषितः । रत्नमालासमाक्रान्तरत्नचित्रार्बुदश्रिया॥३९॥
रत्नदण्डाग्रविलसच्चामरार्बुदवीजितः । ध्वजैश्च मणिसम्बद्धैर्विविधैर्वृषभाङ्कितैः॥ ४०॥
परितो व्यापृतश्शम्भुस्स्थितस्सुखनिधिः प्रभुः। महाप्रभुं तमीशानं दूराद्दृष्ट्वा गणा अपि
सकम्पाश्च विनीताश्च हेमवेत्रकराः परम् । तत्र तावन्न गन्धर्वाः किन्नरा न सुरा अपि॥
तावद्दूरं न गमनं तेषां सम्भावितं यतः । सुमेरुमूले देवानां स्थलानि विविधानि च ॥

---

१. कोटिशः इति पाठः ।
२. अतिसुन्दरः इति पाठः ।
३. प्रासांदोत्तुंगशृंग इति पाठः ।
४. तद्रत्नछविभिः क्रान्तस्स्वतः इति पाठः ।
५. मणिकुण्डल इति पाठः ।

तेषां नारायणादीनां तावद्गमनमेव न। सुमेरुमध्ये कैलासः कदाचित्तत्र शङ्करः।।४
विहारार्थं समायाति लीलाविग्रहसुन्दरः। तत्र तावन्नन्दिकेशप्रसादेन कदाचन।।४
नारायणादयश्शम्भुं प्रणमन्त्यतिदूरतः। तत्रापि वेत्रसङ्घातभीता नारायणादयः ।।
ततोऽपि दूरं गच्छन्ति सकम्पाः प्रभुदर्शने। तथा सति तेदुत्सङ्गशृङ्गप्राकारदर्शनम्
तेषां नारायणादीनामतिदुर्लभमेव हि। तत्र तावत्कुमारस्य गणेशस्यापि दूरतः।।४८
अवस्थानं ततस्तत्र नान्येषां गमनं मतम्। तत्र स्थितं महादेवं गिरिराजकुमारिका
द्रष्टुमभ्युत्थिता शम्भुं प्रपश्यामीति सादरम्। गिरिजापि सुखासीनं हिमवन्तं महेश्व
पप्रच्छ मन्दहासेन दिव्यवेषविराजिता ॥ ५१ ॥

गिरिजा—

अद्य पश्यामि शैलेन्द्र शङ्करं लोकशङ्करम्। प्रासादशृङ्गप्रासादरत्नसिह्मासने स्थितम्
न तत्र सूर्यकिरणाश्चन्द्रस्यापि न रश्मयः। विद्युतामपि ताराणांतत्रवार्ता न वै ध्रुवम्
तदेकान्तस्थलंरम्यंसुन्दराणाञ्च शुन्दरम्। कल्याणानाञ्चकल्याणंपावनानाञ्चपावन
पुण्यानांपुण्यमत्यन्तंततोनास्त्यधिकं क्वचित्। अद्य तद्दर्शनोत्कण्ठा पुनः पुनरुदेति मे

स्कन्दः—

इति तद्वचनं श्रुत्वा हर्षाश्रुपरिपूरितः। अम्बामाह स शैलेन्द्रोविनयानतकन्धरः।।५६

हिमवान्—

शिवे तत्राद्य गमने विलम्बस्ते कियान्वद। पुनरागमने देवि किमुत्कण्ठा प्रजायते ।।
तेद्वियोगव्यथां सोढुं शक्त एव न सर्वथा। अतिदूरेण गमनं मम तत्र गतिर्नहि।। ५८
न यत्र सूर्यकिरणाः प्रसरन्त्यूर्ध्वमप्यधः। कथं तत्रास्मदादीनां गमनं कमलानने ।।

स्कन्दः—

इति तद्वचनं श्रुत्वा मेनया सह पार्वती। आनन्दाश्रुसमाक्रान्ता मन्दमाह गिरीश्वरम्

पार्वती—

सायं वा श्वः परश्वो वा पुनरागम्यते मया। त्वया चिन्ता न कार्यात्र सत्यमेवोच्यते मय

१. तदुत्तुंगशृंगप्रासाददर्शनमिति पाठः। २. अभ्युद्यता इति पाठः।
३. नगेश्वरमिति पाठः। ४. प्रसीदेति पाठः। ५. त्वद्वियोग इति पाठः।

स्कन्दः—

इत्युक्त्वाप्रस्थितांगौरीं सविलोक्यमुहुर्मुहुः। आनन्दाश्रुपरिक्रान्तो न च वाचमुवाचच
स दुःखितंविलोक्याम्वा मेनकामपिदुःखिताम्। विरतागमनेतस्थौशिवाशैलेन्द्रसन्निधौ
एवं स्थिता मासमात्रं नयन्ती दिवसान्हि सा। सल्लापैश्च विहारैश्च शैलेन्द्रानन्दसाधनैः॥
अतः परं कदाचिद्वा भवानी पतिमन्दिरम्। प्रयास्यतीति हिमवानुपचारादरोद्यतः॥
विलक्षणोपचाराणां प्रचारैस्तामनुक्षणम्। पूजयामास गिरिजां वात्सल्येन विशेषतः॥
यस्मिन्दिनेसाधनानितत्पूजार्हाणि तानि[1] च। दिनान्तरेतदन्यानि तदन्यानिदिनान्तरे
एवं प्रतिक्षणं शैलश्शिवामाराधयन्मुदा। मासं क्षणमिवापश्यन्मेनया सह सादरम्॥
ततः परं नन्दिकेशश्शिवाज्ञाकारिणां वरः। समागतो हिमगिरिं गणैर्दिव्यैस्समन्वितः
समालोक्य[2] स शैलेन्द्रो नन्दिकेशं गणेश्वरम्। प्रहृष्टस्स्वासनं तस्मै ददौ कम्पसमन्वितः॥
ततः पूजां यथायोग्यं कृत्वा नन्दीश्वराय सः। कृताञ्जलिपुटो भूत्वा पप्रच्छ विनयान्वितः

हिमवान्—

कुतस्समागतो नन्दिन्कुशली खलु शङ्करः। किमस्ति कार्यमेतावद्भवदागमने वद॥

नन्दिकेश्वरः—

गिरे कुशलरूपस्य शङ्करस्य महात्मनः। सर्वदा कुशलं सत्यं कुशलं कुशलं खलु॥७३॥
यत्पादपद्मस्मरणात्कुशलं सर्वदा गिरे। तस्य नाकुशलं नूनं स एव कुशलप्रदः॥७४॥
महामृत्युञ्जयस्तस्य मृत्युवार्तापि दूरतः। न व्याधिवार्तापि गिरे स यतो व्याधिनाशकः॥
यन्नामस्मरणेनापि विनष्टो रोगसागरः। तस्य रोगभयं कुत्र नित्यानन्दस्य वस्तुतः॥
यदक्षिमीलनेनैव ब्रह्मादिप्रलयो भवेत्। तस्यास्त्यकुशलं किन्तु सा शङ्कापि न जायते॥
नारायणाद्यास्सर्वेऽपि ब्रह्मान्ताःप्रलयं गताः। तान्पश्याम्यहमप्यद्धा शिवपादप्रसादतः
महामृत्युञ्जयत्वेन वेदवेदान्तसंस्तुतः। महादेवस्ततस्तस्य कुशलं सर्वदा खलु॥७९॥
यल्लिङ्गपूजको भक्त्या नरोमृत्युं न पश्यति। तस्य देवाधिदेवस्य कुशलं सर्वथा खलु॥
मदागमनवार्तेयं ज्ञापनीया त्वयाधुना। अम्बिकायै प्रणामाश्च वक्तव्याश्च मया कृताः॥
अङ्गुलीयकमप्येतन्महादेवस्य भूषणम्। प्रदर्शनीयमम्बायै येनानन्दः प्रवर्धते॥८२॥

१. तानि न इति पाठः।    २. समालोक्येति पाठः।

स्कन्दः—

इति तद्वचनं श्रुत्वा गृहीत्वाप्यङ्गुलीयकम् । ददौ सत्वरमम्बायै निवेद्यागमनञ्च तत

तदङ्गुलीयकं दृष्ट्वा हृष्टा सा भववल्लभा । दधार शिरसा भक्त्या नेत्रस्पर्शनपूर्वकम् ।

तदालोकनमात्रेणाप्यानन्दाश्रुकणान्विता । स्वात्मसंवेदनं कृत्वा शिवध्यानं चकार

तेन ध्यानेन नीतोऽपि भूयान्कालस्तया ततः । स्वात्मसंवेदनं प्राप्य जगाद वचनं शि

पार्वती—

कुशली खलु विश्वात्मा महामृत्युञ्जयस्य तत् । कुशलं सर्वथा ज्ञातं तत्राकुशलधीः कु

स महाकालकालोऽतः कालशङ्का न जायते । कालाग्निरुद्रो भगवान्पतिर्मम महान्प्र

अपमृत्युविनाशस्स्यान्महामृत्युविनाशनम् । यस्य स्मरणमात्रेण स पतिर्मम शङ्करः ।

यत्पादपद्मस्मरणान्महाव्याधिर्विनश्यति । स एव मम भाग्येन भर्तासौ भाग्यदायकः

या सर्वमङ्गला नाम्ना सा तावदहमेव हि । तन्नाम तावदेवस्यात्तत्पाणिग्रहणादभूत्

पूजयन्ति महादेवं सुरास्सौभाग्यदायकम् । स सौभाग्यप्रदो भर्ता मम मृत्युविवर्जि

भक्त्या शङ्करपूजनोद्यतमतिर्भाग्योदयाज्जायते
सौभाग्यं मम सर्वदापि न कुतस्सौभाग्यदानोन्मुखा ।
सौभाग्यप्रदपादपद्मनियमध्यानेन मे सर्वदा
सौभाग्यं कुशलं सुखान्यनुदिनं सौभाग्यवृद्धिश्च मे ॥ ९३ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे नन्दिकेशागमनन्नाम
तृतीयोऽध्यायः ॥ ३ ॥

---

## गौरीभगवतीप्रयाणन्नाम चतुर्थोऽध्यायः.

स्कन्दः—

इति तद्वचनं श्रुत्वा प्रहृष्टश्शैलपुङ्गवः । चकार भार्यया साकं विचारमतिसादरम् ॥ १

हिमवान्—

नन्दिकेशो गणाधीशः प्रमथेष्वधिकः परः । तेन सत्वरमागम्य शिववार्ता कृता खलु

अतः परं स न स्थाता त्रिणेत्रप्रेषितोऽस्त्यतः । न तेन सह वक्तव्यं गमनप्रतिबन्धक

१. त्यक्त्वेति पाठः । २. भाग्यालयः इति पाठः । ३. दानोन्मुखे इति पाठः ।
४. व्यासः इति सर्वादर्शपुस्तकेषु दृश्यते तद्विरुद्धमिव प्रतिभाति ।

म्बिकायाः प्रेषणार्थं प्रयत्नःक्रियतां त्वया। बहुकालं किमत्राम्बा सती संस्थातुमिच्छति
तिव्रता पतिं त्यक्त्वा नान्यत्र स्थातुमिच्छति। पतिसेवा परो धर्मस्सर्वसम्पत्प्रवृद्धिदः
रिचर्या परं भर्तुस्तदनुग्रहकारणम् । तेनेष्टसिद्धिर्या सा तु न धर्मान्तरतः प्रिये ॥
तिपूर्वकमद्याम्बा प्रेषणीया किलान्यथा। कोपोऽपि प्रमथेशस्य कथं वा न भविष्यति
रास्तारतराश्चीराण्यपराभरणान्यपि । रत्ननद्धानि देयानि केयूरादीनि कोटिशः ॥
नि नूतनरत्नानि सागरेणाहृतान्यपि । तानि सर्वाणि देयानि तदर्थान्येव तान्यपि॥
दर्थानीति निश्चित्य तान्यनन्तानि यत्नतः। तानि तावत्तदर्थानि तेषां कृत्यश्च किं मम
त्युत्तमाहिमणयःकङ्कणान्युत्तमान्यपि । शिवान्येतानिदेयानिरम्याण्यन्यान्यपिप्रिये
ये सत्वरमाहारो गौर्यै रसविजृम्भितः । सम्पादनीयो यत्नेन भक्ष्याद्यैर्विविधैरपि ॥
द्यैर्लेह्यैश्च पेयैश्च मधुराम्लैर्मनोरमैः। तत्तद्रुमसमुत्पन्नैः फलैरप्यमितैः प्रिये ॥ १३ ॥
च्छादयन्ति छायाभिस्सुमेरुशिखराण्यपि। नमेरुतरवस्तेऽपि प्रेषणीयास्सहाम्बया॥
सूनमालाजालानि तैर्मेरुशिखरावधि । कल्पनीयान्यपाराणि सान्द्राणि विपुलान्यपि
मरन्दैस्सनीहारैः पुष्पछायासमन्वितैः । सान्द्रैर्हिमकराकारैर्न सूरकरसङ्गमः ॥१६
पारकरसङ्काशैराकाशाशाविजृम्भितैः । अम्बिकाया न मार्गोऽपि प्रच्छन्नः पटमण्टपैः
मानान्यपि दिव्यानि कामगानिमनोरमे। सम्पादनीयान्यधुना वाहनान्यपि कोटिशः
न्द्रमण्डलसङ्काशश्चन्द्रमण्डलमण्डितः । सिह्मोऽपि वाहनं देव्या गिरिस्पर्धाङ्करोति सः
नौन्नत्यं वर्धते तस्य यस्य यावदपेक्षितम् । विलक्षणं तदौन्नत्यं सोऽपि रत्नपरिच्छदः॥
न्यान्यप्युपयुक्तानि भवानीगमनं प्रति । तानि संपादनीयानि प्रिये सत्वरमद्यमे ॥

स्कन्दः—

युक्त्वा गिरिजां दृष्ट्वा दूरादेव गिरीश्वरः। आनन्दबाष्पसंवीतो नन्दिकेशमुपागतः॥
पहारादिकं सर्वं भवान्या प्रेपितं मुदा। गृहीत्वा नन्दिकेशोऽपि भुक्त्वासुखमवापसः
त्प्रेषितं चन्दनञ्च कस्तूरीकर्दमान्वितम् । स्वाङ्गेविलेपयामास कृत्वा शर्वार्पणं मुदा॥
सनान्यपि दिव्यानि दिव्यान्याभरणानिच। गृहीत्वा नन्दिकेशोऽथदधारपरयामुदा
तस्मिन्नन्तरे केचिद्गणास्तस्मादुपागताः । विलम्बःकिमभूदेवमिति सत्वरभाषणाः॥

१. तान्यानीतानि इति पाठः। २. कल्पद्रुम इति पाठः।

3 C

तानप्यभ्यागतान्दृष्ट्वा गणान्गिरिवरस्ततः।तेषाञ्च सान्त्वनं तावच्चकारवचनैर्मुहुः।।

[1]तथा पूजां चकारासौ भवानी सन्निधिं ययौ । अम्बां भोजनसन्तुष्टामुवाचवचनं मु

गिरिः—

अम्बान्येऽपिगणास्तावदधुनासमुपागताः। विलम्बः किमिति प्रीत्याशङ्करप्रेषिता

स्कन्दः—

इत्युदीर्य गिरीन्द्रोऽपि सर्वाभरणभूषिताम् । गौरीं दृष्ट्वा मेनकाञ्चप्राहमन्दंविचक्षण

गिरिः—

अम्बाद्यसुमुहूर्तोऽस्ति मध्याह्नेपुण्ययोगतः । गुरुयोगाच्च गमने शुभमेवानुवर्तते ।।

शङ्करेच्छानुसारेण गन्तव्यमितिमेमतिः । विलम्बश्चेत्पुनश्शम्भुर्नप्रेषयतिसत्वरम्।।

शिवेच्छामनुसृत्यैव यस्तु कार्यं करिष्यति ।। तस्य प्रतिक्षणंसौख्यमन्यथातत्कथंभ

स्कन्दः—

इत्युक्त्वा सत्वरं शैलोनानावाद्यसमन्वितः । मन्दम्मन्दंगृहद्वारान्निर्ययावम्बिकायुत

गिरिः—

[2]ततः पुरोवाचमम्बामम्बिके वाहनान्यपि । बहूनि सन्ति ते कुत्र प्रीतिर्वद विचक्षणे

विमानानां कामगानामर्बुदं द्वारितिष्ठति । कण्ठीरवोऽपि गिरिजे सोत्कण्ठस्तिष्ठति

एतासां निष्ककण्ठीनां दासीनामर्बुदानि ते । तिष्ठन्ति तानिनेयानित्वत्सेवार्थमनुक्षण

स्कन्दः—

इति तद्वचनं श्रुत्वा विमानं वीक्ष्य सादरम् । मेनया सहसा गौरी मन्दंवाचमुवाच

पार्वती—

अम्ब त्वया मया साकमामेरुशिखरावधि । आगन्तव्यं गिरीशेनाप्ययोगस्सह्यएवन

स्कन्दः—

इत्युक्त्वा तां समादाय करेण गिरिमादरात् । आरुरोह वरारोहा विमानं कामगन्तदा

देवदुन्दुभयो नेदुर्जगुर्गान्धर्वनायकाः । ववुर्वाताश्शीतलाश्च सुगन्धपरिवेष्टिताः ।।४१

पुष्पवृष्टिरभूद्भूयो मकरन्दरसाकरा । ननृतुश्चाप्सरगणाश्चारुनाट्यविशारदाः ।। ४२

रत्नछत्रार्बुदछायाचारुचामरकोटिभिः । समाक्रान्ता बभौ तावद्यावन्निर्याति शाम्भवी

१. ततः पूजांचकाराथेति पाठः । २. ततः प्रोवाचतामिति पाठः ।

इदानींपुरतस्तस्थौ चन्द्रमण्डलमण्डितः। पञ्चाननोऽपि मामम्बा न सम्भावयतीतिकिम्
दुग्धयोनिधिभिस्साकमम्बिकाग्रेमुदास्थिताः। मन्दारतरुभिस्साकंपुष्पमालासमाकुलैः
इदानीमागतः प्रीत्या सत्वरं रत्नसागरः। रत्नभारगणोपेतस्तत्प्रभाव्याप्तभूधरः॥४६॥
पिताग्निन्द्राद्यमरास्सर्वे देवदुन्दुभिजध्वनिम्। श्रुत्वा सन्तुष्टहृदयाः किं मङ्गलमिदं त्विति

देवाः—

अद्य प्रायो महादेवनिलयं प्रति पार्वती। गन्तुमेवोद्यता नूनं शुभचिह्नप्रभावतः॥४८॥
एवं न शुभचिह्नानि कदापीत्यवधारितम्। गौरीविवाहसमये परं जातानि तानि तु॥

स्कन्दः—

इत्युक्त्वा ब्रह्मविष्ण्वाद्या देवास्सर्वे सुहृद्गणैः। स्ववल्लभाभिस्सहितास्तदा सत्वरमागताः
तपोनिष्ठाश्च सिद्धाश्च सर्वे गिरिवराश्रयाः। स्वस्वभार्यादिसंयुक्ताश्शिवादर्शनकाङ्क्षया॥
तदा किलातिसम्मर्दस्समभूद्यो न सर्वदा। कदाचिद्वा नानुभूतः कृतार्थास्ते न सर्वथा॥
दूराद्विमानशृङ्गाणि दृष्ट्वा नारायणो मुदा। प्रणतः कमलायुक्तस्समुहुस्तद्विलोकयन्॥
ब्रह्मादयोऽपि प्रणताः प्रणताश्च पुनःपुनः। दृष्ट्वा विमानशृङ्गाणि कृतार्था वयमित्यपि
ततश्च नन्दिकेशोऽपि तत्सम्मर्दविलोकनात्। गणानपश्यद्विविधान्रत्नवेत्रैस्समन्वितान्
ततो वेत्राण्युन्नतानि दृष्ट्वा ब्रह्मादयस्सुराः। वेत्रमूलगतं भानुं विस्मयाविष्टमानसाः॥
अत्युन्नतानि वेत्राणि वेगेनपतितानिचेत्।तदाघातस्त्वसह्यस्स्यादिति चिन्तासमाकुलाः

देवाः—

वेत्राघातभयादद्य यदि यामो दिगन्तरम्। तदा कथं वा द्रष्टव्यं भवानीचरणाम्बुजम्॥
अस्तु वेत्रवराघातस्तावतापि न नः क्षतिः। भवानीचरणाम्भोजदर्शनं दुर्लभं खलु॥
वेत्राघातेन मूर्छायामन्ततो मरणेऽपि वा। गौरीचरणवातेन किन्न स्यात्तेन जीवनम्॥
यो गौरीचरणाम्भोजगन्धवाहस्स जीवनम्। तेन सञ्जीवनापेक्षा जीवानान्नोपजायते॥
गौरीपदाब्जगन्धेन गन्धवाहस्समन्वितः। गन्धवाहत्वमापन्नस्स तावदतिदुर्लभः॥

प्राप्तानि जन्मानि बहूनि पूर्वं न तानि धन्यानि कदाचिदेव।
न जातमेवेति विचारयामो विमानशृङ्गन्न कदापि दृष्टम्॥ ६३॥
विमानरत्नाश्रितशैलकन्यापदाब्जगन्धान्वितगन्धवाहः।

पुण्यैरनन्तैरपि दुर्लभोऽयं प्राप्योऽधुना वेत्रवराभिघातैः ॥ ६४ ॥
पश्यन्ति सर्वे ऋषयोऽपि सिद्धास्त्यक्त्वा समाधिं फलमेतदेव ।
अम्बाविमानाग्रविलोकनं वा किन्नैव तत्तत्तपसोऽधुनेति ॥ ६५ ॥
फलं यदेवोग्रतपःप्रभावात्प्राप्तव्यमस्माभिरिहाधुना तु ।
विमानशृङ्गाग्रविलोकनेन जातप्रभावश्श्रुतिषु श्रुतोऽपि ॥ ६६ ॥
अस्माकमिष्टं फलमद्य जातं शिवः प्रसन्नोऽपि भविष्यतीति ।
चिह्नानि दृष्टानि बहूनि तेषां फलं विमानाग्रविलोकनं नः ॥ ६७ ॥
यत्पादपद्मप्रभया विमानं तत्पद्मरागान्वितवद्विभाति ।
तद्दर्शनं नैव विलोकितञ्च शिवापदाम्भोजमिति स्मरामः ॥ ६८ ॥
तत्पादपद्मप्रभया समेता वयं क्षणार्धेन मुदा भवामः ।
ततश्चलत्येव न तद्विमानं सर्वात्मना सर्वफलाश्रयञ्च ॥ ६९ ॥
तदूर्ध्वदेशेषु यदि प्रयाति तदा तु तद्दर्शनमेव नात्र ।
आयाति चेदत्र सुमेरुमूलं तदा वयं धन्यतमास्सुरेषु ॥ ७० ॥
यद्यस्माकमनन्तजन्मतपसा प्रीतो भवानीपति-
र्भाग्यश्चेदनुकूलमद्य बहुधा गौरीपदाम्भोरुहम् ।
द्रक्ष्यामस्सकलेष्टदाननिपुणं पुण्याकरं पुण्यदं
नोचेद्दुर्लभमेव जन्म सुकृतप्राप्यं जगन्मण्डले ॥ ७१ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे गौरीभगवतीप्रयाणन्नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

## देवीप्रार्थनन्नाम पञ्चमोऽध्यायः.

व्यासः[1]—

ततः परं सुरास्सर्वे तद्विमानावलोकनात् । उत्पश्यन्तोऽपि सन्त्रस्तास्तदाघातभयाद्
तद्वेत्रच्छायया त्रस्तो निर्गतोऽन्यत्र[2] भानुमान् । अदृश्य एव सञ्जातश्चन्द्रवार्तापि तत्र न

१. इतः प्रभृति व्यासः इत्यत्र स्कन्दः इति मन्तव्यम् । २. नात्रभानुमानिति पाठः ।

तः परं प्रचलितं घण्टाघोषविजृम्भितम् । पताकार्बुदसंवीतं चामरार्बुदसंयुतम् ॥ ३ ॥
न्द्रकोटिगणोपेतं ग्रहमालाविराजितम् । प्रतिक्षणं नवमभूत्तद्विमानं मुनीश्वराः ॥४॥
त्कं दिगन्तं तद्गन्तुं क्षणेनैव न संशयः । तथापि मन्दमेवेदं चरति प्रीतिपूर्वकम् ॥५॥
ष्पवृष्टिरभून्मध्ये प्रतिक्षणमनुत्तमा । मन्दं मन्दारपवनैः परिवीता प्रतिक्षणम् ॥६॥
न्दारतरवोऽप्युच्चास्तेन प्रचलितास्तदा । स्वच्छायया समाक्रान्तं कुर्वन्तस्सादरं मुहुः ॥
रहारगणच्छन्नपुष्पगुच्छसमन्वितम् । विमानं दूरतो दृष्ट्वा ननृतुर्देवतागणाः ॥ ८ ॥
तः परं मन्दमेव मेनका प्राह तां शिवाम् । तत्सन्तोषप्रवृद्ध्यर्थं सुरानुग्रहकाङ्क्षया ॥९

मेनका—

शिवे पश्य सुरान्दूरे प्रणतान्भक्तिपूर्वकम् । सुरनारीगणं पश्य पश्य सिद्धाङ्गनाश्शिवे ॥
श्य किन्नरनारीणां गणं गन्धर्वयोषिताम् । त्वत्पाददर्शनोद्योगादद्य ताभिर्विनिर्गतम् ॥
निपत्नीगणान्पश्य सिद्धपत्नीगणानपि । नागनारीगणान्पश्य परितः प्रणताञ्छिवे ॥
श्य नारायणं गौरि प्रणमन्तं मुहुर्मुहुः । तस्यैव निकटे लक्ष्मीं प्रणतामतिसादरम् ॥
लपाणिप्रिये पश्य वाणीं तां प्रणतां मुहुः । चतुर्वक्त्रं प्रपश्याम्ब शचीनाथं तयायुतम् ॥
णवेत्रगणस्तान्पश्यान्यानमरानपि । गौरित्वच्चरणाम्भोजप्रभासम्भावनादरात् ॥१५
टाक्षं करोति कमला पश्यतां कमलानने । स्वाभीष्टसिद्धिरधुनाशिवा संप्रेक्षणादिभिः ॥
णी गुणगणानम्ब तव स्तौति पुनः पुनः । स्ववाणी पुण्यतां यातु शिवासङ्कीर्तनादिति ॥
मेरुमूलगमने तदिष्टावाप्तिरित्यतः । मेरुमार्गेण गन्तव्यमद्य शङ्करमन्दिरम् ॥ १८ ॥
कामगस्य विमानस्य विचित्रागतिरस्त्यतः । नान्यमार्गेण गन्तव्यो दया यदि सुरेष्वपि ॥

स्कन्दः—

इत्युक्त्वा गिरिजां दृष्ट्वा क्षुत्तृष्णादिकशङ्कया । विविधानुपहारांश्च कल्पयामास मेनका ॥
सुधांपीत्वासुधास्यन्दिकल्पाकल्पफलान्यपि । विविधानिसमास्वाद्यसंतुष्टागिरिकन्यका
दिव्योपहारसन्तुष्टा ताम्बूलललितानना । उत्फुल्लपद्मनयना सा गौरी रुरुचे द्विजाः ॥२२
ततः परं प्रचलितं विमानं रत्नराजितम् । मेरुमूलमुमा देवान्प्रीणयन्त्विति सत्वरम् ॥२३॥

१. संप्रेक्षणादितीति पाठः । २. सुरोपरीति पाठः ।
३. कल्पानल्पेति पाठः । ४. वदना इति पाठः ।

ततस्सुरगणास्सर्वे सन्तुष्टाः प्रणताश्शिवाम् । तुष्टुवुर्विविधैस्स्तोत्रैःकृतार्थास्स्म इतिद्वि

देवाः—

जय गौरि जगद्वन्द्ये जय शङ्करवल्लभे । जयपद्मानने देवि जय श्रीसर्वमङ्गले ॥ २५

जय स्मरहरार्धाङ्गतुङ्गसिंहासनाश्रये । जय श्रीकण्ठविविधशृङ्गाररससंश्रये ॥ २६ ।

जय कर्पूरकस्तूरीचन्दनाङ्गविलेपने । जय मन्दारविलसन्मालिकासमलङ्कृते ॥ २७

जय हारविहाराढ्यकुचकुम्भान्तरस्थले । जय रत्नगणाकीर्णकोटीराम्बरभासुरे ॥२

जयानन्तमणिच्छन्नसुवर्णाभरणान्विते । जय पूर्णसुधारश्मिसमानवसनोज्ज्वले ॥ २

तारहीरवराक्रान्तताटङ्कघटितालके । मणिदर्पणसङ्काशकपोलललिते शिवे ॥ ३० ॥

जय नीलाचलाकारवेणीमण्डलमण्डिते । जय मत्तेभकुम्भाभसुधापूर्णकुचाश्रये ॥ ३

उन्मत्तमीनसङ्काशनयनश्रीसमन्विते । गङ्गावर्तातिगम्भीरनाभिकान्तिविराजिते ॥

जयाणुमध्यललिते रोमालिभ्रमरावृते । उन्मत्तहंसगमने जय चन्द्रालके शिवे ॥ ३३

जय मौनिमनःपद्मसद्माश्रितपदाम्बुजे । जय भक्तजनानन्दप्रवृद्धिकरणोद्यते ॥ ३४

जय श्रीकण्ठकण्ठस्थबाहुवल्ली विराजिते । जय स्वभक्तदुःखाब्धिविशोषणविचक्षणे

जयानन्दसुधाम्भोधिस्वरूपे जय शाम्भवि । जय स्वर्गापवर्गादिफलदानोन्मुखेशिवे

पाहि पाहि सुरानस्मांस्त्वत्पादाम्बुरुहार्चकान् । अनन्यशरणानम्ब जगदालम्बनेजय

भजामो भजामस्स्मरारिप्रियां तां भजामो भजामो भजामो भवानीम् ।
भजामो भजामो भजामो भजामश्शरण्याग्रगण्यां भजामो भजामः ॥ ३८ ॥
भजामो भवत्पादपद्मप्रसादप्रभावानुबद्धाः प्रबुद्धास्सुखेन ।
भजामश्चिरं गौरि संसारबन्धं सनिर्बन्धमाशु प्रलीनं कुरुष्व ॥ ३९ ॥
भवत्पादसेवासमासक्तचित्ताश्श्रिया सेवितास्सर्वदा भाग्यवन्तः ।
भवत्पादपद्मं विनान्यन्न विद्मः प्रसादानुकूलं न विद्मो न विद्मः ॥ ४० ॥
भवत्पादुकाराधका एव लोके नरास्स्युर्धराधीशपूज्यातिपूज्याः ।
भवद्दर्शनं जातमस्माकमम्ब प्रसन्नाः कृतार्थाः कृतार्थाः कृतार्थाः ॥ ४१ ॥
सकृद्वा भवत्पादपद्मप्रभाभिर्वियं भूषिताश्चेत्तवाद्याम्ब किं वा ।

१. कोटीरवरेति पाठः ।

धनं याति दीनेषु दत्तं धनं चेद्धनं वृद्धिमेतीति धन्या वदन्ति ॥ ४२ ॥
प्रतीक्षा कृता तावदद्याम्ब शीघ्रं त्वदङ्घ्र्यम्बुजाराधने साधुनापि।
न जाता तथापि स्वचित्तेषु दुःखप्रवृत्तं भवत्पादपद्मश्रियानः ॥ ४३ ॥
अनन्तैस्तपोभिस्तुलाकोटिदानैस्तथा यागपूगैर्व्रतानां समूहैः।
भवत्पादसन्दर्शनं धर्मवीजं परन्तु प्रसादात्तवैवाद्रिकन्ये ॥ ४४ ॥
भवत्पादपङ्केरुहादेतु वातः करोतु श्रिया संयुतानेव लोकान्।
स लोकोपकाराय सृष्टस्त्वयापि त्वमेवासि माता पितासि त्वमेव ॥ ४५ ॥
भवत्पादपद्मश्रिया [1]संयुतानि पवित्राणि सर्वाणि रूपाणि गौरि।
गिरीन्द्रोऽपि धन्यस्तवाराधनेन श्रिया मेनका सापि धन्यापि मान्या ॥ ४६ ॥
तवानुग्रहः प्रार्थितोऽपि प्रयासैरलभ्यः कृतोऽपि प्रयासं विनापि।
अकस्माद्यदि त्वत्पादाम्भोजभक्तिस्तदा सोऽपि लभ्यो भवत्येव गौरि ॥४७॥
भवत्पादपद्मप्रसादस्य पात्रं वयं तावदम्वाधुना धन्यधन्याः।
इतोऽप्यन्यदस्माकमाशास्यमस्तीत्युपेक्षा न कार्या त्वया दीनवर्गे ॥ ४८ ॥
शिवे किञ्चिदन्यं न नः प्रार्थनीयं भवत्पादपद्मानुरागं विनापि।
स एवानुरागो महाभोगहेतुस्स सेतुस्सुराभीष्टरत्नाम्बुराशेः ॥ ४९ ॥

नमस्ते कल्याणि त्रिपुरहरवामाङ्कसदने
नमस्ते शर्वाणि स्मरहरमनोहारिवदने ।
नमस्ते रुद्राणि स्खलदमलनीलोत्पलदल-
छलच्छायाछन्नछदिमधुरगम्भीरनयने ॥ ५० ॥

नमस्ते नीलाद्रिद्रवविपुलकल्लोलविविध
प्रभाभावाभावद्रवललितनीलालककुले ।
नमस्ते भक्तेष्टप्रदचतुरपादाम्बुजयुगे
नमस्ते भूयस्ते पुनरपि नमस्ते पुनरपि ॥ ५१ ॥

१. संयुतानां पवित्राणि गात्राणि शर्वाणि गौरि इति पाठः ।

प्रणामानम्रेन्द्रप्रमुखवनितायल्लकमणि-
प्रभास्पर्धामर्दामृतकरशिरोरत्नमहिला ।
मुहुर्दृष्ट्वा दृष्ट्वा निजचरणजाग्रच्छविकृतं
स्मितव्यक्तानन्दा दिशतु मम कल्याणसरणिम् ॥ ५२ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे देवीप्रार्थनन्नाम
पञ्चमोऽध्यायः ॥ ५ ॥

---

देवताप्रार्थनं नाम षष्ठोऽध्यायः

व्यासः—

इति प्रसादिता देवैर्मेरुमूलसमाश्रितम् । स्वर्गलोकमवापाम्बा दिव्यपुष्पकसंश्रिता ॥
पुष्पवृष्टिरभूत्तत्र सान्द्रासुन्दरमञ्जरी । मन्दं मन्दारपुष्पौघगन्धवाहसमन्विता ॥ २
ततः परं सुरास्सर्वे विमानवरसंस्थिताः । तत्प्रभासङ्घसङ्क्रान्तां द्रष्टुमभ्युत्थिता मुदा ॥
अत्युन्नतविमानस्थां नशेकुर्द्रष्टुमम्बिकाम् । ततः परं गद्गदाभिर्वाग्भिस्तुष्टुवुरम्बिकाम् ॥

देवाः—

गिरिराजकुमारिके शिवे चरणं ते कमलामलं कथम् ।
न निरीक्षितमादरेण तन्निगमैरप्यवधारितन्नहि ॥ ५ ॥
अधुना चरणाम्बुजं शिवे यदि ते दृष्टिपथं प्रयास्यति ।
कथमप्यघकोटिनाशकं सकलाभीष्टदमप्यसंशयम् ॥ ६ ॥
न विमानमणिप्रभागणैः कथमप्यादरतो न सर्वथा ।
नयनैर्न निरीक्षितं तदा कथमस्माकमुमेगतिर्भवेत् ॥ ७ ॥
शफरीचललोलदृष्टिभिः कथमप्यम्ब विलोकयाशु नः ।
यदि ते करुणारसालयस्सुरवर्गोऽप्यपवर्गभाजनम् ॥ ८ ॥
अतिदीनदयालुता शिवे त्वयि वेदैरपि निश्चिता ततः ।
अतिदीनगणेषु वा सुरान्गणयित्वा जगदम्ब पाहि नः ॥ ९ ॥

---

१. अभ्युद्यता इति पाठः ।    २. चटुलोल इति पाठः ।

किमशक्यमिहाम्बिके शिवे न हि दीनोच्चवचश्श्रुतश्च किम् ।
अतिदूरविलोकनेऽपि ते श्रम एवेति विशेषतोऽमितम् ॥ १० ॥
निकटस्थितभक्तपालनं करुणावीक्षणदृष्टिभिश्शिवे ।
कथमप्यनुपारमम्बिके न हि ते कोऽपि तथा भवेच्छ्रमः ॥ ११ ॥
अधुना यदि गम्यते त्वया त्रिदशाधीश्वरशङ्करालयः ।
निलयं सुखसागरस्य ते पुनरप्यागमनं कथं भवेत् ॥ १२ ॥
न वयं गिरिराजकन्यके करुणापात्रमिति प्रमापिते ।
पतितानपि पावयस्युमे पतितेष्वेव सुरान्विलोकय ॥ १३ ॥
तव दृष्टिरदृष्टतो भवेदिति [1]निर्णीतमतिप्रयत्नतः ।
तपसापि न तस्य साधनं भवतीति प्रमितं प्रमातृभिः ॥ १४ ॥
किमहो न दया गिरीन्द्रजे दयनीयाः कति ते जगत्त्रये ।
नहि तेषु सुराः पतन्ति वा दुरदृष्टं किमिहामरेष्वपि ॥ १५ ॥
शिवपूजनसाधिता पुरा सुरता सा न कथं मता तव ।
शिवपूजकभक्तिरस्ति ते त्वमुमे शङ्करतत्परा खलु ॥ १६ ॥
तव यद्यपि शङ्करे रतिस्त्वरया गन्तुमुमार्धविग्रहे ।
कथमत्र भविष्यतीति सा गिरिजेनैव हि विघ्निता भवेत् ॥ १७ ॥
अतिदीनसुरानुपालने न च विघ्नोऽपि पथि प्रियादरे ।
परमापदगाधसागरे पतितानुद्धर सादरं सुरान् ॥ १८ ॥
यदि गौरि भवेदुपेक्षया गमनन्ते [2]पतिमन्दिरं प्रति ।
स शिवोऽपि कथन्नपृच्छति त्रिदशाः [3]किन्नविलोकिता इति ॥ १९ ॥
गमनप्रतिबन्धकश्च किं क्षणमात्रानवलोकनेऽपि ते ।
अतिदुःखमहाब्धिमालया वलिता एव सुराश्शिवेन किम् ॥ २० ॥
किमसाधुजनत्वनिर्णयस्तव देवि त्रिदशेष्वपीति ते ।
क्षितिरस्ति किमत्र नश्शिवे तदपाकर्तुमपि क्षमा न किम् ॥ २१ ॥

१. निर्णीयमिति पाठः । २. हरमन्दिरमिति पाठः । ३. किन्नु इति पाठः ।

तव दर्शनमात्रतश्शिवे दुरिताब्धिः प्रलयं प्रयास्यति ।
सुखसागरपंक्तिरादरादनुयात्येव शिवार्चकालयम् ॥ २२ ॥
गिरिजे स वदान्यतामगाच्चरणस्ते न च तन्निरीक्षणम् ।
अधुना सुखसाधनं शिवे न तवायासलवोऽपि सर्वथा ॥ २३ ॥
तव कल्पतरुर्न चाम्बिके न च चिन्तामणिरद्रिकन्यके ।
सुरधेनुरयं परन्त्वहो चरणः कोऽपि सुधाघनो घनः ॥ २४ ॥
स सुधा घनतामुपागतश्चरणस्ते सुररूपपादपान् ।
अभिषिञ्चतु दुःखपावकप्रतितप्तानधुना मुहुर्मुहुः ॥ २५ ॥
क्व सुधाघनता क्व धीरता सुरचित्ताम्बुजपूजनार्हता ।
क्व सुरानवलोकनादराश्चरणस्यास्य तवाम्ब शाम्भवि ॥ २६ ॥
करुणाब्धितरङ्गमालया ललितं ते नयनाम्बुजं शिवे ।
तदिदं सुरबृन्दमन्दिरे प्रसरत्वाशु सुखाम्बुधिप्रदम् ॥ २७ ॥
गिरिजा नयनावलोकनं सुरनारीसमपेक्षितं क्षणम् ।
कमलाप्यनुवारमम्बिकाचरणाम्भोजरजःप्रसादजा ॥ २८ ॥
कमला कमलैरलं वलिं गिरिजा पादुकपूजनप्रिया ।
पुरतः पुरतः प्रसर्पति प्रवहन्ती गिरिजे विलोकय ॥ २९ ॥
किमतः परमस्ति वाञ्छितं गिरिजापादुकदर्शनं विना ।
तदनन्तसुखप्रदं शिवे त्रिदशानामपि दुर्दशापहम् ॥ ३० ॥
क्व चतुर्दशलोकनाथता क्व कृपासागरता दयार्द्रता ।
क्व निरन्तरदीनबन्धुता क्व तवाद्याप्यकृपा सुरेष्वपि ॥ ३१ ॥
क्व वदान्यवदान्यमान्यता क्व दयातुङ्गतरङ्गलोलता ।
क्व शिवार्चकमातृता शिवे क्व तवाद्याप्यकृपासुरेष्वपि ॥ ३२ ॥
मनुजेष्वपि ते शिवे दया गुरुसंसाररतेष्वनुक्षणम् ।
न वयं तदपेक्षया क्षताः क्षणमप्यम्ब विलोकयाशु नः ॥ ३३ ॥
यदि ते चरणारविन्दयोः प्रभयापि प्रसुभूतयानया ।

न वयं परितो विभूपिताः कथमस्माकमुमेऽपि जीवनम् ॥ ३४ ॥
अमरानव शङ्करप्रिये करुणापात्रमिति स्मरामरान् ।
शरणन्तव पादपङ्कजं न तदन्यच्छरणं सुरप्रियम् ॥ ३५ ॥
वयमेवमुमार्धविग्रहं गिरिजामप्यभयाय सर्वदा ।
शरणं शरणाय कुर्महे शरणं नान्यदपेक्षितं खलु ॥ ३६ ॥
अनुवारमुमाहरौ परं प्रणतास्स्मस्स्मरणैरनुक्षणम् ।
गतकल्मपराशयः पुनः प्रणतास्स्मः प्रणताः पुनः पुनः ॥ ३७ ॥
यदि दैवतदैवतं प्रभुं भवमम्बां भवभारभीरवः ।
न वयं प्रणताः पुनः पुनर्न कृतान्तोऽपि किमत्र नृत्यति ॥ ३८ ॥
अमिता प्रभुता तवाम्बिके तव या सैव महेश्वरेऽपि सा ।
न तदन्यगतागतः क वा शरणं नश्शरणार्थिनामपि ॥ ३९ ॥
न महाप्रभुसेवकाः परं भवदुःखं न भवं प्रपेदिरे ।
न मृगेन्द्रगृहेषु कीकसाः करिमुक्ताफलकन्धरेष्वपि ॥ ४० ॥
यदि ते चरणारविन्दयोः प्रसवः कोऽपि समर्पितस्तदा ।
अधमोऽपि नरो जगत्पतिर्भवतीत्येव वदन्ति साधवः ॥ ४१ ॥
अमरानतिदीनवत्सले क्षणमप्यम्ब विलोकयादरात् ।
करुणारससारधारया दरसंसारदवातुरानुमे ॥ ४२ ॥
यदि ते न विलोकनं तदा सुरतायामपि नादरोऽस्ति नः ।
न तया फलमस्ति किन्त्वया गिरिजे कल्पतरुस्वरूपया ॥ ४३ ॥
तव वा किमुपेक्षया फलं प्रविलापोऽपि न नश्श्रुतस्त्वया ।
अयि मातरुमे किमास्तिकेष्वदयाकारणमस्ति शाम्भवि ॥ ४४ ॥
शिव एव दयानिधिश्शिवे तव तावत्कठिनं मनो यतः ।
अधुनापि न दीनवीक्षणं क्रियते सादरमम्बुजानने ॥ ४५ ॥
सुतमप्यपराधसङ्कुलं जननी पालयतीति नश्श्रुतम् ।

१. मन्थरेषु इति पाठः । २. वन्ध्यतनुस्वरूपयेति पाठः ।

किमुमे वद पातकानि नस्तव नामस्मरणेऽप्यनुक्षणम् ॥ ४६ ॥
बहुतूलगिरिप्रदाहको दवलेशो न शिवे तथैनसाम् ।
कुलमाशु विनाशमेत्यहो शिवनामस्मरणाग्निलेशतः ॥ ४७ ॥
यदि पापविनाशसाधनं शिवनामस्मरणं न शैलजे ।
वद तर्हि किमस्ति साधनं वद सत्यं वद तद्विमर्शतः ॥ ४८ ॥
निगमेष्वघनाशसाधनं शिवनामस्मरणं परं श्रुतम् ।
तदिदं न कथं विनाशकं विविधाघौघकुलस्य शैलजे ॥ ४९ ॥
सितभूतिविभूषणश्शिवं यदि तावत्प्रणतस्स्मरन्मुदा ।
प्रपतन्ति महाघकोटयः पुनरुत्थानविवर्जिताः परम् ॥ ५० ॥
वयमीश्वरलिङ्गपूजकाः क्व महापातकभीतिरद्रिजे ।
न महानलसन्निधिं गतो हिमभीतः पतितः प्रधावति ॥ ५१ ॥
क्षुधितोऽप्यमृताशनः पुमांस्तृपितोऽपीति यथा तथा शिवे ।
शिवलिङ्गसमर्चनप्रियो न च दुःखाम्बुनिधिं प्रयास्यति ॥ ५२ ॥
न च शङ्करपूजकार्चकोऽप्यघलेशाश्रयतामुपैत्यतः ।
अघसंश्रयवार्तयापि वा न वयं शैलसुते समावृताः ॥ ५३ ॥
कृपया परया शिवप्रिये त्वरया पश्य दयासुधाकरान् ।
कुरु कापि न तावता क्षतिर्न सुधारश्मिसमानता तव ॥ ५४ ॥
गिरिजे न चकोररक्षकः क्षणदानायक इत्यपि श्रुतः ।
न हि तेन स सेवितस्तथा कृपया पश्य सुराञ्छिवप्रिये ॥ ५५ ॥
किमनाथसनाथतां त्वया गिरिजे कर्तुमनुद्यमः कृतः ।
किमनेन फलं फलार्थिनां किमयं धर्म इति श्रुतस्त्वया ॥ ५६ ॥
न भवत्कृपया विना गतिर्यदि गत्यन्तरमस्ति नस्तदा ।
तव मास्तु निरीक्षणं ततो गतिहीनानमरानवाम्बिके ॥ ५७ ॥
अस्माकं शरणागतामरशिरःकोटीरहीरप्रभा-
पारावारतरङ्गसङ्गतशिवाकान्ताङ्घ्रिपङ्केरुहे ।

पश्चायल्लकमल्लचञ्चलतले श्रीचन्दनापादुके
दुष्टानिष्टनिवारके शरणमित्यन्यं न मन्यामहे ॥ ५८ ॥
इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे देवताप्रार्थनं नाम
षष्ठोऽध्यायः ॥ ६ ॥

---

## कैलासगमनं नाम सप्तमोऽध्यायः.

व्यासः—

ति वृन्दारकास्स्तुत्वा कृताञ्जलिपुटामुहुः । उत्पश्यन्तो विमानाग्रं ननृतुस्स्वगुहृद्गणैः
तश्शिवापदाम्भोजप्रभाधारानुलोकनम् । कृत्वा कृतार्थतां प्राप्य प्रणतास्ते मुहुर्मुहुः॥
तः प्रचलितं तावत्स्वर्गलोकमतीत्यतत् । ब्रह्मलोकं विष्णुलोकं कैलासमगमत्ततः ॥३
दानीममरास्सर्वे परस्परविलोकनैः । परिश्रान्ताश्च तुष्टास्ते वार्तां चक्रुर्यथोचिताम्॥४

अमराः—

श्यन्तु गतमेवेदं विमानमतिसत्वरम् । तन्नास्मदृष्टिविपयस्तत्कान्तिर्दृश्यते सुराः ॥५
पः फलितमस्माकं तद्धारावीक्षणादपि । द्रष्टव्यं कथमस्माभिश्शिवाचरणपङ्कजम्॥ ६
द्धारादर्शनेनैव कृतार्थाः प्रमथा अपि । अस्माकं तत्र का वार्ता तावतैव कृतार्थता ॥
त्पादपद्मरजसः प्रसादेन जगत्त्रयम् । समुत्पन्नमिदं देवास्समुत्पन्नास्तदद्भुतम् ॥८॥
द्धाराप्रभया छन्नस्सुरलोकोऽ[1]पिपावनः । सत्यलोकोऽपि वैकुण्ठोऽप्ययमत्यन्तपावनः
मतः परमिहास्माकमग्रेऽपि कुशलं खलु । तत्पादप्रभया सर्वेऽप्यावृतास्स्मो वयं क्षणम्
कं किं पुण्यं पुरा चीर्णं न विद्मस्तत्फलेन तत् । अनेनानुमितं देवास्तद्धारामण्डलेन हि
अस्माकमपि गात्राणि पवित्राण्यद्यधारया । शिवाचरणकान्तीनां सा धारा खलुदुर्लभा॥
दुर्लभा दुर्लभा धारा गौरीचरणकान्तिजा । सा पावनं पावनानां शोभनानाञ्च शोभनम्
अस्मन्मणिकिरीटानां तद्धाराकान्तिसङ्गमात् । कान्तिःप्रवृद्धासङ्गेन तेनकिञ्चित्रमद्भुतम्
हेम्नः पावकयोगेन कान्तिवृद्धिर्यथा तथा । तत्कान्तिसङ्गमाद्वृद्धाः[2] किरीटमणिभूप्रभाः

व्यासः—

इत्यन्योऽन्यं वदन्तस्ते तद्वार्तामेव ते पुनः । कुर्वन्तस्सुखमापन्नास्ते हर्षाश्रुसमावृताः॥

---

१. अतिपावनः इति पाठः । २. तद्धारासंगमादिति पाठः ।

ततः परं तद्विमानं कैलासमगमद्द्विजाः । अवतीर्य ततो गौरी मेनकामाह सादरम्॥

गौरी—

चित्राणि मन्दिराण्यत्र सुन्दरास्तरवः परम् । ये ते हारविहारार्हाः प्रदेशास्सुरदुर्ल
न दृष्टास्ते त्वया पूर्वमधुना नात्र शङ्करः । ततः प्रपश्य तच्चित्रं गिरिराजसमन्वित

व्यासः—

इत्युक्तं तद्वचश्श्रुत्वा मेनया गिरिणा सह । कैलासद्वारसन्नद्धवेदिकाकान्तिसंवृताम्
विचित्ररत्नखचितां वेदिकां वीक्ष्य पर्वतः । अतिविस्मयमापन्नस्तद्रत्नप्रभया वृतः ॥

हिमवान्—

किमाश्चर्यमिदं गौरि रत्नान्येतादृशानि न । रत्नाकरेऽपि रम्याणि दृष्टपूर्वाणि न ध्रुवं
कैलासनगरद्वारवेदिकारत्नकान्तिभिः । कान्तमेतच्छरीरं मे दृष्टपूर्वमिदं तु न ॥२
कान्तिः फणिफणारत्नकान्तिं दूरीकरोत्यतः । वेदिका सङ्गता सेयं विमानेनापि सङ्ग
एतत्कान्तिसमाक्रान्तं विमानमिह राजते । अत्याश्चर्यमिदं दृष्टमग्रे किं किं भविष्यति
ते धन्याः प्रमथास्सर्वे वेदिकाकान्तिसंवृताः । नित्यमत्र प्रभारूपास्स्वानुरूपविवर्जि
अहो महदिदं भाग्यं दृष्टमेवमिदं स्थलम् । अस्माभिरीदृशं स्थानं न श्रुतञ्च कदाच

व्यासः—

इत्युक्तं गिरिवाक्यं सा श्रुत्वा गौरी शिवप्रिया । तत्रोपविष्टा तेनापि मेनयापि सहादरा
ततः परं मेनका सा सुन्दरैस्सुरभूरुहैः । फलान्यादाय रम्याणि गौरीमाह मनोहरम्

मेनका—

एतादृशानि दृष्टानि न फलानि पुरा मया । तरवोऽपि तथा दृष्टाः प्रकृष्टास्तुष्टिहेतवः
एतद्दर्शनमात्रेण सम्पूर्णमुदरं शिवे । अतः परं भक्षणेच्छा जातु गौरि न जायते ॥३

व्यासः—

इत्युक्तं तद्वचश्श्रुत्वा गौरी तामाह मेनकाम् ॥

गौरी—

अत्राप्यद्भुतबुद्धिस्ते तथा न मम जायते । अन्तःपुरप्रवेशेन सुखं यद्यद्भविष्यति॥३
तदपूर्वं भवत्येव प्रतिक्षणमसंशयः ॥ ३३ ॥

व्यासः—

युक्त्वापरितोदृष्ट्वा तान्यास्वाद्यफलानिच। मन्दंमन्दंप्रविष्टा सागिरिजाशिवमन्दिरम्
ाद्भुतानि दृष्टानि मन्दिराणि बहून्यपि । रत्नैरेव विचित्रैस्तैः कृतानि सुमनोहरम् ।।
ाप्रवाहसंवीताः कुल्यास्तुल्या न कैरपि । तत्तीरकल्पतरवोऽप्यपारफलसंवृताः ।।
म्वागमनकालज्ञैः प्रहृष्टैस्तरुभिस्सदा । पुष्पवृष्टिः कृता कापि या नपूर्वमभून्मुहुः ।।
तत्तरुमूलेषु रत्नलिङ्गानि कोटिशः । दृष्ट्वा सा पूजयामास मरन्दैः कुसुमैरपि ।।३८
मध्ये मण्टपस्तावदखण्डमणिमण्डितः। योजनायुतविस्तीर्णस्तावद्योजनमुन्नतः।।३९
त्रैव प्रतिमाः काश्चिदपूर्वाश्चातिसुन्दराः। हृष्टास्सहासाश्चान्योन्यं गानतानविजृम्भिताः
र्यङ्कमेकं तत्रैव शतयोजनमुन्नतम् । शतयोजनविस्तीर्णं प्रभाकूटविराजितम् ।। ४१ ।।
न्दारपुष्पसंवीतं शयनार्हं शिवस्य तत् । शिवाविहारगन्धेन तत्संवीतमनुत्तमम् ।।४२।।
त्रसोपानसम्बद्धमष्टदिक्षु विशेषतः । सोपानेष्वपि पुष्पाणि नूतनानि क्षणेक्षणे।।४३।।
दृशं मञ्चमालोक्य शैलेन्द्रो मेनया सह । उवाच वचनं चारु भवानीञ्च विलोक्य सः।।

हिमवान्—

दं प्रायो महेशस्य विलाससदनं प्रिये । दृष्टमानन्दजं जातं स्पृष्टञ्चेत्किं प्रयच्छति ।।
ौरीमनोहरं रम्यं शङ्करस्य मनोहरम् । पर्यङ्कं दृष्टमद्येदं धन्योहं नात्र संशयः।। ४६ ।।
दं न दृष्टममरैर्गन्धर्वैरमरैरपि । किन्नरैरपि सिद्धैर्वा गणैरपि विशेषतः ।। ४७ ।।
तादृशं मणिमयं पर्यङ्कं शङ्करालये । गौरी तिष्ठति सन्तुष्टा शङ्करानुग्रहात्परम्।।४८।।
तादृशं स्थलं तावदुग्रयापि तपस्यया । न लभ्यते सत्यमेव न क्वाप्येतादृशं स्थलम् ।।
स्मत्प्रीतिप्रदानायगौर्यातावत्प्रदर्शितम्। नाधुना शङ्करोस्तीतितस्मिन्त्सत्यतिदुर्लभम्
भामण्टपपर्यन्तं सञ्चरन्ति गणा अपि । अमराणां न वार्तापि द्वारि तेषामवस्थितिः।।
भामण्टपमालोक्य कस्तृप्तिन्नाभियास्यति । तन्मण्टपमणिस्तम्भगाम्भीर्यं वर्ण्यते कथम्
दर्बुदमणिस्तम्भप्राकारपरिवेष्टितम् । अखण्डास्ते मणिस्तम्भाश्चित्ररत्नविराजिताः ।।
नीभूता रत्नकान्तिस्तत्रास्तरणमव्ययम् । कोटिशस्सन्ति परितो रम्यास्ते रत्नमण्टपाः
षु सर्वेषु पुष्पाणि मन्दारतरुनिस्सृताः । मरन्दधारासङ्कीर्णास्तेषु लिङ्गानि कोटिशः

१. कालैतैरिति पाठः ।

तदेव रमणीयानां रमणीयं मनोहरम् । रमणीयत्वमेतस्य किं वक्तव्यमतःपरम् ॥
एतादृशं विहायाम्बा स्थलं मन्मन्दिरे कथम् । स्थातुमिच्छति कल्याणी प्रेम्णापि सततं
यादृशानि फलान्यत्र तादृशानि फलानि न । अस्मन्मन्दारतरुषु तथा सुरतरुष्वपि
तैरर्कतरुसङ्काशैर्मन्दारतरुभिश्च किम् । एते विलक्षणा एव तरवस्सफलास्सदा ॥
नाममात्रेण समता तरूणां नार्थतस्तथा । अतस्ते तरवस्तावन्नैतत्तरुसमाः प्रिये ॥
एतत्तरुफले दृष्टेऽप्यानन्दोऽपि प्रजायते । न तत्तरुफलैरेवं भक्षणेनापि भूरिशः ॥

व्यासः—

इत्युक्त्वा मणिपर्यङ्कं दूरान्नत्वा पुनःपुनः । गिरिः प्रदक्षिणीकृत्य स्वं कृतार्थममन्य
ततः परं घनीभूतविचित्रमणिकान्तिषु । मृदुलेषूपविश्याम्बा गिरिमाह विचक्षणा ॥

गौरी—

तल्पैरनल्पैर्मृदुलैस्सुखस्पर्शस्तु नेदृशः । स्वतस्सुगन्ध एवायं रत्नकान्तिसमुच्चयः ॥६
इदमेतादृशं रम्यं स्थलमेतदपेक्षया । अनन्तगुणिते रम्ये स्थले तिष्ठति शङ्करः ॥६
तन्मेरुशिखराग्रेषु रत्नेनैकेन निर्मितः । प्रासादस्तस्य शृङ्गेषु प्रासादः कश्चिदुत्तमः
तत्रास्ति स महादेवः परमानन्दविग्रहः । अनन्तेन्दुरविप्रख्यः प्रख्यातश्श्रुतिषु स
तद्दर्शनार्थमधुना गन्तव्यं त्वरया मया । भवतां गमनं तत्र नैव सम्भावितं गिरे ॥६
चन्द्रमण्डलमादातुं नरः किमभिवाञ्छति । कृतायामपि वाञ्छायां कथं तत्तेन लभ्
एवमेव गिरिश्रेष्ठ तन्मन्दिरविलोकनम् । दुर्लभं तत्र गमनं गन्तव्यमित एव हि ॥७
निधीन्पश्य गिरिश्रेष्ठ पश्याभरणमण्टपान् । दुकूलमण्टपान्पश्य विचित्रमणिमण्टपान्
मण्टपे मणयस्सन्ति ते सर्वेऽभीष्टदास्सदा । अपेक्षितं प्रयच्छन्ति स्वयमानीय सादर

व्यासः—

इत्युक्त्वा रत्नपात्रेषु विशालेषु तदा शिवा । मनोहरान्नपूर्णेषु चकार परिवेषणम् ॥७
ततो भुक्तं तया साकं मेनया शिवया सह । सुधाफलानि भुक्तानि पक्वान्नान्यपि कोटि
पश्चादाचम्य सुधया ताम्बूलमपि सादरम् । गृहीत्वा विस्मयापन्नो गिरिरानन्दसंवृत
ततःपरं विचित्राणि वसनानि ददौ शिवा । कल्पान्तेऽपि न नश्यन्ति मलिनान्यपि तानि

१. स्वतः इति पाठः ।

मुज्वलता तावद्वृद्धिमेति प्रतिक्षणम् । परिधानेऽपि जीर्णत्वमसम्भावितमेव हि ॥
न्यपि ददौ तस्मै सा रत्नाभरणान्यपि । अपराणि विचित्राणि मेनकायै ततः परम्
वतमदस्तम्भहेतुभूतान्गजानपि । तुरङ्गांश्च तथोत्तुङ्गान्देवाश्वमदनाशकान् ॥ ७९
गाश्च विचित्रास्तास्सुरगोमदनाशनीः । प्रकृष्टान्त्सर्वफलदान्मन्दारानपि कोटिशः

विमानान्यपि दिव्यानि कामगान्यपि कोटिशः ।
अन्यान्यपि विचित्राणि फलानि प्रददौ शिवा ॥ ८१ ॥

ै परिमलद्रव्याण्यपराणि शिवप्रिया । ददौ हारानुदारान्त्सा तारहीरसमावृतान् ॥
त्वा तावदेतावदम्बादत्तमिदङ्गिरिः । वियोगभीत्या सन्तुष्टोऽप्यसन्तुष्ट इव स्थितः
स्मिन्नन्तरे काले विमानवरसंयुताः । अन्ये गणाश्शङ्करेण प्रेषितास्समुपागताः ॥
सर्वे नन्दिकेशेन गणैरन्यैश्च संवृताः । कैलासनगरद्वारवेदिकायां परं स्थिताः ॥८५॥
गणाः—
लम्बस्समभून्नन्दिन्किमेतदुचितं तव । स्वामिकार्यार्थमुद्युक्तो न विलम्बं करोति हि
दाचित्कुपितस्स्वामी यदि कार्यविरोधतः । तदा कथं जीवनं स्यात्सेवकानां विशेषतः
कानाञ्च यत्कृत्यं तत्कृत्यमतियत्नतः । कर्तव्यं सत्वरं तेन तुष्टस्स्वामी भविष्यति ॥
श्चेत्कष्टमेव स्यात्फलं किन्नभविष्यति । तत्कष्टापेक्षया कष्टं स्वामिकार्यविनाशने ॥८९
व कार्यं कर्तव्यं भृत्यैर्येन स्वनायकः । तुष्टो भवति तद्भिन्नं न कार्यं प्रलयेऽपि वा ॥
न्यानुरोधकृत्यं किं स्वामिकार्यविरोधतः । सर्वैः प्रयत्नैः कर्तव्यं सर्वथा स्वामितोषणम्
व्यासः—
युक्तं तद्वचश्श्रुत्वा नन्दिकेशो विचक्षणः । प्राह प्रसन्नवदनो विनयान्वयसंयुतम् ॥
नन्दिकेश्वरः—
यमाप्ततमा एव शङ्करस्य न संशयः । भवदुक्तं हि तत्सत्यं न तत्राप्यस्ति संशयः ॥
दि कार्यान्तरे स्वामी नियोजयति मां तदा । तत्क्षणेनैव कर्तव्यमसाध्यं न जगत्त्रये ॥
म्बा स्वतन्त्रा तस्यास्तु दर्शनं मम दुर्लभम् । तस्यास्त्वरा तु केनापि कर्तुमेव न शक्यते
स्वेच्छयाविहारंचेत्करिष्यतितदाकथम् । अस्माकं प्रतिबन्धोऽपि कर्तव्यस्सादरंवद ॥
हाप्रभुत्वमम्बायाश्शङ्करस्य यथा तथा । तदग्रे वक्तुमिच्छामि कथं वा भवति स्फुटम् ॥
कोटियोजनदूरस्थास्सुरास्सर्वेऽपि सादराः । पूजार्थमागतास्तेषां दर्शनं जातमेव न ॥

प्रणामैस्ते परिश्रान्तास्स्वेदधारापरिप्लुताः। तद्धाराभिस्समुद्रोऽपि पूर्णोऽत्युद्वेल
देवाङ्गनाश्च पद्माग्र्याः प्रणतास्ताः पुनःपुनः। श्रान्ताः केवलमम्बायास्तासु दृष्टिर्नि
विमानरत्नमारूढा मृडानी संस्थिता तदा। उत्पश्यन्तस्सुरास्सर्वे स्वस्वदारसमा
अहो स सम्भ्रमस्तावदवाङ्मनसगोचरः।तद्विहारप्रभावोऽपि वेदानामप्यगोचरः॥
अहो शिवाविलासोऽयं विलासश्शैव एव हि। तद्दर्शनन्न पुण्यानां राशिभिर्वा प्रजा
तदागमनवेलायामुत्साहा यादृशाः पुरा। तादृशा न कदाप्यग्रे भविष्यन्ति विशेष
विलक्षणस्स समयश्शिवागमनसंयुतः। तानि तूर्याणि ते वातास्तादृशाः पुष्पवृष्ट
ते जयध्वनयो देव्यास्तानि स्तोत्राणि यैस्सुरैः। कृतानि श्रवणेनापि सिद्धिदानि प
सिद्धानामपि सम्मर्दो गन्धर्वाणाश्च कोटिशः। किन्नराणां मुनीनाञ्च वक्तुमेव न श
वेत्रप्रहारसन्त्रस्तास्सर्वे नारायणादयः। अद्यापि कम्पसम्पन्नास्सुरनारीगणैस्सह
सन्त्रस्ता अपि सानन्दास्सर्वे नारायणादयः। सवाग्विषयतान्नाप मनोविषयताम
न वृत्तं भवतां भाग्यं तत्सम्मर्दावलोकने। रत्ननीराजनानाञ्च राजयस्तास्तथाचि
देवाङ्गनाभिस्सर्वाभिस्तदा गानपुरस्सरम्। नीराजनानि दत्तानि तेषां सङ्ख्या न श
नीराजनप्रभाकूटो मेरुकूटप्रभाकरः। स किं न दृष्टस्सहसा भवद्भिर्मेरुकूटगैः॥ १
मन्नेत्राणां फलं जातं तत्सम्मर्दावलोकने। शङ्करस्यैव कृपया तत्फलंजातमद्य मे॥
तत्फलेन पवित्रस्य मम भीतिर्न सर्वथा। शङ्करेणापि तज्ज्ञातमतः केन भयं मम॥
स सर्वज्ञो महादेवः कुपितः किं मयि प्रभुः। अस्वातन्त्र्यमपि ज्ञातं तेनाप्यागमनो
इदानीं सम्प्रविष्टास्ते कैलासभवनान्तरे। तत्रास्माकं प्रवेशः किं येन स्याद्गमनत्व
अतः परं प्रयत्नोऽपि कर्तव्यो भवतां यदि। सामर्थ्यं तत्र वार्ता वा कः करिष्यति सत

व्यासः—

एवं वदत्सु सर्वेषु गणेष्वन्योन्यमादरात्। वाणी कापि समुत्पन्ना तस्मिन्नेवाशरी
अम्ब प्रयातु शैलेन्द्रो मेनया सह मन्दिरम्। स्वमन्दिरपरिष्कारः कर्तव्यस्तेन किं
विलम्बोऽपि कियानेवं शिवदर्शनलालसे। शिवानुग्रहवाञ्छायां विलम्बो युक्त ए
इति तद्वचनं श्रुत्वा सिह्ममारुह्य शैलजा। प्रेषयामास शैलेन्द्रं सर्वसम्पत्समन्वितम्

सा दृष्टा गिरिणा पुनः पुनरुमा दृष्ट्वाथ सा मातरं
सा दृष्टापि तया पुनः पुनरपि प्रेम्णा पुनर्दर्शने।

इच्छां सापि चकार सोऽपि गिरिराडानन्दधाराद्वृतः
प्राहाम्बामनुवारमम्बकृपया मां पश्य पश्येत्यपि ॥ १२२ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे कैलासगमनं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

नाट्यावलोकनन्नाम अष्टमोऽध्यायः.

व्यासः—

त्वा सिद्धमम्बा सा क्षणमात्रं ततः परम् । शङ्करप्रेषितं दिव्यं विमानवरमाश्रिता ॥
मन्विमाने संविष्टा यदा शङ्करवल्लभा । तदा दुन्दुभयो नेदुर्जयशब्दपुरस्सरम् ॥२॥
स्ते प्रमथास्सर्वे शर्वाणी चरणाम्बुजम् । स्मृत्वा प्रहृष्टाः प्रणताः पुनःपुनरनातुराः
दुन्दुभिघोषैस्ते जयध्वनिपुरस्सरम् । वेत्रहस्ताः प्रचलिताः कम्पयन्तस्सुराचलम् ॥
नामानुवादेन शिवासन्तोषहेतुना । सानन्दा एव सर्वेऽपि धावन्तः पुरतो बभुः ॥
आ नामानि तान्यम्बा मनोज्ञानिशिवप्रिया । आनन्दपरिपूर्णा सा स्मरन्तीशङ्करंमुदा
नामानि गायन्ती मधुरं मधुरस्वरा । मधुराक्षरसम्पन्नान्यनुवारं शिवप्रिया ॥ ७ ॥

अम्बा—

शिव हर भव भर्ग भीम शम्भो स्मरहर शङ्कर शर्व चन्द्रमौले ।
त्रिणयन वृषकेतनान्तकारे गिरिश गिरीश मृडेश रुद्र पाहि ॥ ८ ॥

शम्भो भर्ग भवेन्दुशेखर महादेव स्मरारे हर
श्रीकण्ठेश महेश शङ्कर मृड त्र्यक्षाक्षरोमापते ।
शर्वोग्रेश्वर रुद्र भीम भगवञ्छूलिन्कपर्दिञ्छिव
श्रीमृत्युञ्जय विश्वनाथ गिरिश श्रीवामदेवाव माम् ॥ ९ ॥

शम्भुं शङ्करमिन्दुशेखरमुमाकान्तं महेशं शिवं
शर्वं रुद्रमनङ्गदक्षमथनं मृत्युञ्जयं शङ्करम् ।
भर्गं भूतपतिं भवं पशुपतिं फालाक्षमुक्षध्वजं
भीमं दिग्वसनं मृडं हरमजं श्रीकण्ठमीशं भजे ॥ १० ॥

शम्भो क्वापि न तारका अपि न वा चन्द्रो न वा भानुमा-
न्नान्यः कोऽपि सुरोऽत्र कुत्र वसतिश्श्रीचन्द्रमौले तव ।
प्रासादद्युतिकोटिकोटिघटिताद्दृष्टिर्ममाद्याधुना
विद्युत्सङ्घसमावृतेव भगवन्त्सर्वात्मना कुण्ठिता ॥ ११ ॥
एतन्निर्मितमत्र किं मणिमयस्थानं प्रभामण्डलैः
व्याप्तं मण्डितमेव मण्डलमिदं किं मण्डनं वाञ्छति ।
स्थानं नैव विलोक्यते घनतरं गम्भीरमेतादृशं
तेजः पुञ्जघनं घनान्तरमिदं नापेक्षते सर्वदा ॥ १२ ॥
अत्रानन्तसुरादिसेवकगणास्तस्तास्स्वनारीगणै-
स्साकं शोकविवर्जिताः प्रतिदिनं कम्पायमाना अपि ।
सेवन्ते तदनुत्तमं स्थलमुमाकान्तो विहायात्र किं
तिष्ठत्यत्र महाप्रभुः प्रभुतमं रम्यं स्थलं केवलम् ॥ १३ ॥

व्यासः—

इत्युक्त्वासाशिवातस्मिन्विमाने विपुलेस्थिता । एकैवाहं वसामीति चिन्तयाकुल
महेशनिकटे तावदेवं गन्तुं न शक्यते । परिचर्यार्थमत्रान्याः कल्पनीया मनोरमाः
मयैव यदि तत्राद्य गम्यते शङ्करोऽपि माम् । विलोक्य सादरं किम्मां वदिष्यति वि
एकाकिनी कथं नारी विमाने विपुले स्थिता । नारी परिजनाक्रान्ता नारी तावद्वि
अमरप्रवरार्धाङ्गमहमेकाकिनी कथम् । गन्तुमभ्युत्थिता धीरा वीरशङ्करमन्दिर
इत्यालोच्य तदा गौरी दिव्यसौन्दर्यविग्रहाः । ससर्ज क्षणमात्रेण कोटिशो मुनिपु
रत्नाभरणसम्पन्ना यौवनाक्रान्तविग्रहाः । रूपलावण्यसम्पन्ना नवा एव प्रतिक्षण
विचित्रमाल्यवसनास्सुरनारीविनिन्दकाः । रूपेणानन्यतुल्येन स्वयौवनमदेन
रुद्रवीणास्समादायतास्सर्वाश्चपृथक्पृथक् । शिवनामानिदिव्यानिगायन्तिस्म मनो
तानिनामानि शृण्वन्ती परमानन्दरूपिणी । सा कल्याणी मुदंप्राप्य सच्चिदानन्दल
आदाय स्वयमप्येकां वीणावाणीषु लालसा । वीणांप्रवीणा रुद्राणी गानतानरता
न तद्गानं विजानन्ति गन्धर्वा अपि किन्नराः । तथान्येऽपि सुरास्सर्वे सुरनारीगणा

१. शिवनः इति सकलान् इति च पाठः ।

एवं गानविलोला सा वीता चामरकोटिभिः। छत्रार्बुदच्छाययापि सञ्छन्ना सा ययौ शिवा
ङ्करस्तत्समारम्भं ज्ञात्वा तत्तोषकारणम्। पुनस्सम्प्रेषयामास गणानमितविग्रहान् ॥
ोपिद्गणांश्च विविधान्त्सर्वाभरणभूषितान्।सौन्दर्यभेदसम्पन्नान्गानलोलान्मनोहरान्
णतूर्यध्वनिं श्रुत्वा तद्गानमपि दूरतः। अद्भुतं गानमेतावत्कृत्यमित्याह शाम्भवी॥२९

अम्बा—

ायस्सोऽयं शिवेनैव तोषस्सम्पादितो मम। अपूर्वनारीस्सृष्ट्वापिगानसृष्ट्यापिशङ्करः॥
ङ्करत्वान्महादेवश्शङ्करत्वं स्वकं पुनः। प्रवृत्तं कर्तुमेवेदं सृष्टं सर्वमिति स्मृतम् ॥३१
शक्यं किं महेशस्य मदनुग्रहवाञ्छया। सृष्टमेतावदधुना विविधं चन्द्रमौलिना॥३२
यि तावत्कृपादृष्टिरद्यापि गिरिशस्य सा। सा तावद्रक्षणी या मे विरूपाक्षावलोकनात्
त्कृतोऽपि विलम्बोद्य विस्मृतश्चन्द्रमौलिना। कृपालुत्वं मयि स्वामी प्रकटं कर्तुमिच्छति
स्य देवाधिदेवस्य शङ्करस्य महात्मनः। मदनुग्रहवाञ्छापि तपसा भूयसापि सा॥३५

व्यासः—

इत्यालोच्य पुनर्गौरी महेशप्रेषितं गणम्। नारीणामपि तं दृष्ट्वा प्रहृष्टा सा पुनः पुनः ॥
ततस्तास्सुरनारीणां पराभवविचक्षणाः। दण्डवत्प्रणतास्सर्वास्स्तुतिपूर्वकमादरात् ॥
नीराजनानि दत्तानि दिव्यरत्नगणश्रिया। नानामणिगणाकीर्णाः पात्राण्यादायकोटिशः
उपहारानेकांश्च तदानीं तान्गिरीन्द्रजा। शिवनैवेद्यशेषत्वबुध्या जग्राह सादरम् ॥
तान्यास्वाद्य विचित्राणि फलानि जगदम्बिका। कृतार्थत्वमतिं चक्रे शिवनैवेद्यसेवनात्

अम्बा—

दुर्लभं शिवनैवेद्यमद्य प्राप्तं मयाधुना। पावनं चित्तमप्यद्य पावनानाञ्च पावनम् ॥४१॥
शिवनैवेद्यकोट्यंशकोट्यंशोप्यतिदुर्लभः। सम्पूर्णं शिवनैवेद्यं कस्य वा सुलभं भवेत् ॥
पुरोडाशं धिक्करोति शिवनैवेद्यमीदृशम्। पुरोडाशैः किमेतावद्भक्षितैः फलमाप्यते ॥
अलं यागसहस्रेणाप्यलं योगार्बुदैरपि। भक्षिते शिवनैवेद्ये शिवसायुज्यमाप्नुयात् ॥
अतःपरं शङ्करस्य सन्निधानमविघ्नितम्। येनेदं शिवनैवेद्यमकस्मात्समुपागतम्॥४५॥
न यद्यपि क्षुधा तावदधुना मे तथापि किम्। नोपेक्षणीयं सहसा शिवनैवेद्यमागतम् ॥
दृष्टेऽपि शिवनैवेद्ये यान्ति पापानि दूरतः। भुक्ते तु शिवनैवेद्ये पुण्यान्यायान्ति कोटिशः
दूरतश्शिवनैवेद्यगन्धोऽप्यायाति चेत्तदा। पापसङ्घास्तु सहसा प्रलयं यान्ति वस्तुतः ॥
यद्गृहे शिवनैवेद्यप्रचारोऽपि प्रजायते। तद्गृहं पावनं सर्वमन्यपावनकारणम् ॥ ४९ ॥

आगतं शिवनैवेद्यं गृहीत्वा शिरसा मुदा। भक्षणीयं प्रयत्नेन शिवस्मरणपूर्वकम्॥ ५
क्षीरं वा फललेशं वा जलं वा शङ्करार्पितम्। गृहीत्वा मुच्यते सद्यः पापकोटिगणात्
आगतं शिवनैवेद्यमन्यदा ग्राह्यमित्यपि। विलम्बे पापसम्बन्धो भवत्येव हि मानवः
न यस्य शिवनैवेद्यग्रहणेच्छा प्रजायते। सपापिष्ठगरिष्ठस्स्यान्नरकं यात्यपि ध्रुवम्॥

व्यासः—

इत्युक्त्वाशिरसागौरीतानिसर्वाणिसादरम्। आस्वाद्यास्वाद्यसन्तुष्टाशङ्करस्मरणोत्सु
महेशपीतशेषां तां सुधामादाय शैलजा। पुनःपुनः पपौ भक्त्या धाराभूतां धुनीमिव
ततस्ताम्बूलमादाय शिवार्पितमुमा तदा। तत्कृतं गानमाकर्ण्य नाट्यं द्रष्टुं समुद्यता॥ ५

अम्बा—

ततस्तत्कृतनाट्यानि विचित्राणि विशेषतः। दृष्ट्वा विस्मयमापन्ना गानाकर्णनतत्परा
न केनापि कृतं नाट्यं पूर्वं शङ्करमन्दिरे। कैलासेऽपि विलासाढ्ये तादृशं तद्विलक्षण
मत्प्रीत्यर्थमिदं सृष्टं नाट्यमीशेन वस्तुतः। मयि तावत्कृपा शम्भोरधुनाप्यनुवर्तते॥ ५
इदं नाट्यं विहायाग्रे गन्तुमेव न शक्यते। [1]प्राप्तश्शिवापराधोऽपि गमने मे भविष्यति
प्रेषितश्शङ्करेणैव नाट्यं स्त्रीणां गणोऽधुना। एतद्विहाय गमने प्रत्यवायो भविष्यति।
अस्य नाट्यस्य समयः कियानारम्भमात्रतः। सन्तोषराशयो वृद्धाः किमग्रे मे भविष्य
नेत्रत्रयेण तन्नाट्यं द्रष्टुमेव न शक्यते। सहस्रेणापि नेत्रेण लक्षेणाप्यर्बुदेन वा॥ ६३
किन्त्वपाराणि नेत्राणिविशालान्यमलानिच। तैर्नाट्यमीदृशंदृष्ट्वासन्तुष्टानभवामिकि

व्यासः—

इति गौरीविचार्यादौससर्ज नयनानि सा। विपुलानि विचित्राणि रम्याण्यपिविनोदत
तैर्नेत्रैस्तादृशंनाट्यंविलोक्याम्बाप्रतिक्षणम्। सन्तुष्टास्वस्वरूपञ्चविस्मृत्यविवशास्थित
तन्नाट्यालोकनेनैव नीतः कालःकियानपि। प्रतिक्षणं नवं नाट्यं केन वा तन्नदृश्यते
तन्नाट्यवार्ताश्रवणं कृत्वा रम्भादिका अपि। विस्मयाविष्टहृदयाः पुरादेवेन्द्रमन्दिरे
प्रतिक्षणं नवं नाट्यं कथं ताभिः कृतं तदा। नाट्यविद्यापि सात्यल्पानतत्तद्विषयंखलु
विचित्रं निर्मितं नाट्यं तद्विद्यायांनयन्मतम्। तादृशंनाट्यमीशेनसृष्टमात्राद्भुतञ्चकिम्
विचित्रसृष्टिकरणे समर्थश्शङ्करः खलु। ततस्तत्रापि किं चित्रं तदस्माकं हि दुर्लभम्
प्रासादः खलु सृष्टोऽस्ति शङ्करेण सतादृशः। [2]स्वर्गलोकेनागलोकेसत्येविष्णुपदेऽपिव

१. प्राय इति पाठः। २. नयादृशस्स्वर्गलोके इति पाठः।

थैव नाट्यसृष्टिस्स्यात्सा विद्या तत्र सात्रन।तावतापि किमज्ञत्वमज्ञत्वेऽपिननःक्षतिः॥
ाविद्यास्वर्गलोकेऽस्तितद्भ्यासोनचेत्तदा । अस्माकमज्ञता सेयमभ्यस्तासाविलक्षणा
स्माकं तादृशं भाग्यं तद्विद्याभ्यसनेकुतः । सा विद्या परमा विद्या शङ्करेणविनिर्मिता
वादत्र समायाति कृपया शङ्करस्य सा । अभ्यासस्तत्र कर्तव्यस्तदागमनमेव न ॥
ानवार्ता श्रुता पूर्वं तद्गानं नात्र सर्वथा । नूतना गानविद्या चेदत्र सापि कथं भवेत् ॥
केञ्च सौन्दर्यधारापिदिव्यनाट्याङ्गनाश्रिता।साधाराकेनवालभ्यासाकिलात्यन्तदुर्लभा
तिक्षणं नवं तासां सौन्दर्यमतितोषदम् । तत्कथं प्राप्यते लोके दुर्लभं तदिति श्रुतम् ॥
द्वाञ्छां कमला तावदधुनापि करोतिसा । वाणीशची च छायाचतदिहात्यन्तदुर्लभम्
के वाञ्छया फलप्राप्तिर्विलक्षणफलोदयः । भूरिपुण्यतपोलभ्यस्तत्तपस्तासुकुत्रवा ॥
लाससदनावासश्शिवदासीगणस्य यत् । तत्सौन्दर्यं न लोके तु सुरनारीषु सर्वथा ॥
लासदासीवदनं दृष्ट्वादृष्ट्वा पुनःपुनः। कमला लज्जया तावद्दूरान्नम्रमुखीस्थिता॥८३
रूपं सृष्टमीशेन किमेतन्ममदुर्मुखम् । साहं तपस्यया शम्भुः प्रीतो मत्कृपया खलु॥८४
सौन्दर्यमेव नारीणां निधिस्तेन विना सुखम्। न प्राप्यतेहिनारीभिर्धनलाभेऽपिभूरिशः
न चाभरणवाञ्छापि सौन्दर्ये सति यौवने । दुर्लभं तद्द्वयं प्राप्य नारी किञ्च मनोरमा॥
नारीरत्नमितिप्रोक्तं रम्यं सौन्दर्ययौवनैः। तदभावे तृणप्रायाः पतितं तत्तृणं वरम्॥८७
ातिवृत्यं यौवनं च सौन्दर्यं च विशेषतः । शङ्करानुग्रहेणैव नारीभिः प्राप्यते परम् ॥
शिव दासीमुखं दृष्ट्वा नम्राका न सुराङ्गना। वैरूप्याश्रयतां ज्ञात्वा कास्वनिन्दांचकारन
द्दासी यौवनस्यापि वैलक्षण्यं महत्तरम् । तन्नामराङ्गना प्राप्यं तदन्यत्र कुतो भवेत्॥
ादृशं भाग्यमन्याभिर्बहुजन्मतपस्यया । कृतयापि न सम्प्राप्यं शङ्करानुग्रहं विना ॥
अकस्माद्यदि सम्प्राप्यश्शङ्करानुग्रहस्तदा । सर्वभाग्यसमाकीर्णा तूर्णमेव भवत्यपि ॥
कुर्वन्ति तपसा प्रीतं शङ्करं लोकशङ्करम् । संसारवार्तां श्रुत्वापि तद्वार्तायाः फलञ्चन ॥
किञ्च यद्यत्परं रम्यं विलक्षणमनुत्तमम् । तदनुग्रहमात्रेण शाङ्करस्य प्रजायते ॥ ९४ ॥
शङ्करानुग्रहे वीजं शिवलिङ्गसमर्चनम् । तदर्चनेन यत्प्राप्यं तत्प्राप्यं नान्यधर्मतः ॥९५॥
धर्मः को वा भवेद्येन सुप्रीतश्शङ्करो भवेत् । शिवलिङ्गार्चनं त्यक्त्वा तदर्चनमनुत्तमम् ॥

१. नालसंशयः इति पाठः । २. दुर्भगा इति पाठः । ३. त्यक्त्वापि इति पाठः ।

किञ्च मुख्यस्स्वर्गलोकाच्छिवलोकइति श्रुतः।तस्मिन्लोकेपुण्यपुञ्जैस्स्थीयतेशाङ्करैः
नस्स्वर्गनाममात्रेण स्वर्गलोकोऽयमीदृशः। शास्त्रेषु स्वर्गशब्दार्थः प्रसिद्धस्स तुनात्र
दुःखान्यत्र बहून्येव सुरवैरि कृतान्यपि। दुःखाकृतिस्स्वर्गलोकः कथं वा शास्त्रनिश्चि
मुख्यस्स्वर्गाख्ययाख्यातःकैलासइतिविश्रुतः।नायंस्वर्गस्स्वर्गवार्ताभ्रान्तानामत्रके
किञ्च यद्दुर्लभं लोके सर्वेषामपि दुर्लभम्। लिङ्गार्चनेन सम्प्राप्यमन्यत्प्राप्यं न सर्वथा
अधिकारोऽपि लोकेऽस्मिन्दुर्लभश्शिवपूजने। तस्मिन्त्सति किमप्राप्यं फलं शङ्करपू
तथापि तादृशं नाट्यं दृष्ट्वा गौरी मनोहरम्। तदा न विरता जाता तत्र नाट्यावलोक
अभिनवशिवदासीनाट्यमानन्दराशिर्गिरिवरतनया। सा सादरं वीक्ष्य तस्मात्।
अनुगतमनुवृत्ता वर्तमाना विमाने पुनरपि शिवदासी नाट्यलोला बभूव ॥ १०

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे नाट्यावलोकनं नाम
अष्टमोऽध्यायः ॥ ८ ॥

---

नन्दिकेशगणसंवादोनाम नवमोऽध्यायः.

व्यासः—

नाट्यावलोकनानन्दपारावारवरैःपरम्। गौरी समावृता रेजे तन्नारीगानलालसा॥
विचित्रप्रतिमानाट्यमपूर्वं द्रष्टुमुद्यता। अपूर्वगानलोला च विवशा जगदम्बिका ॥ २
ततः परं महादेवस्तद्विलम्बं विलोक्य सः। पुनर्गणानपूर्वांश्च प्रेषयामाससत्वरम्॥
तेऽपि सर्वे महोत्साहा नन्दीशप्रमुखैर्गणैः। प्रमुखाश्शङ्कराज्ञायास्स्वरूपं प्राहुरादरा

श्रीशङ्करः—

किं कृत्यं नन्दिकेशेन किं वा कृत्यं गणैरपि। किमन्यैरपि मे कृत्यं स्वकार्यकरणोद्यतैः
क्षणः कल्पायते सोऽयं गौरीदर्शनवर्जितः। उत्साहवृद्धिहेतुश्च दृश्यते न तया विना॥
लोके सन्ति पदार्थाश्च बहवस्तोषहेतवः। किं तैरनन्तैरपि मे पदार्थैरपि साधकैः ॥ ७
रमणीयतरं वस्तु गौरीरूपं मनोहरम्। तदन्यत्तादृशं लोके न जातं न भविष्यति ॥८
नारीसृष्टिरपूर्वापि विलासाय कदाचन। क्रियते तादृशी सृष्टिस्स्तत्कल्पोऽपि नजायते

---

१. स्वर्गलोकः इति पाठः।

न्मुहूर्तं सा सृष्टा समुहूर्तोऽपि दुर्लभः । मुहूर्ते महिमा को वा सा सृष्टिस्तावदद्भुता॥
मुहूर्तोऽपि मया सुमुहूर्तो विलक्षणः । तन्मुहूर्तसमानस्तु मुहूर्तोऽपि न दृश्यते ॥१२
कल्पोऽपि कल्पान्ते कल्पमध्येऽपि दुर्लभः। कल्पादिरयमेतस्मिन्त्समयेदृश्यतेऽपिन
व्यासः—
थोक्तं तद्वचश्श्रुत्वा नन्दिकेशादयो गणाः । परस्परं मुखं दृष्ट्वा विचारं चक्रुरादरात् ॥
नन्दीश्वरः—
मुक्तं महेशेन तत्कार्यं तदपेक्षितम् । विलक्षणमिदं कार्यं कर्तुमेव न शक्यते ॥१४॥
देवगणास्सर्वे तृणेनैकेन तन्तुना । विसवल्या निबद्धाश्च सामर्थ्यं तादृशं मम॥१५
क्रान्तस्थितास्सर्वेसागरास्सरितस्तथा । सरांसिच तथान्यच्चजलम्मुक्ताफलाकृति
ाग्रनिपातेन कम्पयन्ते सुरा अपि । ब्रह्माण्डमण्डलं सर्वमणुकल्पं कृतं मया॥१७॥
त्यभृत्यभृत्योऽपि ब्रह्मविष्ण्वादिपूजितः। तं दृष्ट्वापि सकम्पास्ते किमिहागत इत्यपि
गमनवेलायां कृताञ्जलिपुटास्तदा । दण्डवत्प्रणता एव भवन्ति सदरासुराः ॥१९
र्थ्यमीदृशं सर्वं महेशस्यैव यद्यपि । तथापि तत्कृपालेशादभिमानो ममेदृशः ॥२०
किङ्करभावेन मम सामर्थ्यमीदृशम् । तथापि किं करोम्यत्र सामर्थ्यं कुण्ठितं मम ॥
ठते सति सामर्थ्ये कार्योत्कण्ठा न जायते । अतस्तत्कार्यकरणं दुर्लभञ्चाधुना मम॥
वा प्रभुत्वं कास्माकं तत्कार्यकरणोद्यमः । महाप्रभुर्महादेवः किन्नजानाति तद्द्वयम् ॥
आपि स महादेवो महाप्रभुरिति स्वयम् । अस्मानाज्ञापयत्येव महद्भाग्यमिदं खलु ॥
मादौ प्रेपितोऽस्मि ततः प्रचलिता शिवा । सोत्कण्ठया परं तत्र न कृत्यं मम सर्वथा
स्वातन्त्र्यमीशेन गौर्यास्तावद्विनिश्चितम् । नान्याज्ञावशगा गौरी स शिवानुग्रहस्तथा
श्वरानुग्रहस्य किमशक्यं जगत्त्रये। तदनुग्रहपात्रत्वं दुर्लभं जगतीतले॥ २७ ॥
ानुग्रहमप्राप्य तावन्नारायणादयः । तपस्याकरणोद्युक्तास्सर्वेऽपि गिरिकन्धरे ॥२८
ते समागताः केचिद्भवद्भिरधुना गणाः । समागतं किमेतेन भवदागमनेन तु ॥२९
न्यावलोकनोद्युक्ता गिरिराजकुमारिका। भवदागमनं तावत्तया न ज्ञायते खलु ॥
न्नाट्यसमारम्भः क गणागमनादरः । भवदागमनेनापि न कार्यं भावि दृश्यते॥ ३१
तांगणना कुत्र मम चान्यस्य चाधुना । कोटिशो वा समायान्तु गणाःकिं तैःप्रयोजनम्
णानां प्रवेशोऽस्ति तन्नारीनाट्यमण्टपे। तद्द्वारदेशेऽपि गतिरस्माकमतिदुर्लभा॥३३

पुनःपुनस्समायान्ति तत्र नाट्याङ्गनाः किल । गतिर्गानानुमानेन नूतनेनानुमी
गणाश्शृण्वन्तु तद्गानं नानुभूतं पुरा मया। नान्यैर्विघ्नेश्वराद्यैर्वा महेशेनापि वा
सृष्टास्ताश्शङ्करेणैव गाननाट्यविशारदाः । तिरस्कारश्शारदायाः परं ताः कृत
क शारदा क कमला क तदन्यामराङ्गनाः।तद्गन्धगन्धगन्धोऽपि किमत्र प्रसरिष्या
गाननाट्यविलोलायाःपार्वत्याश्चलने यदि। विलम्बस्तावता कावा स्यादस्माकंवि
अयं विलम्बो देवस्य महादेवस्य सर्वथा । अपेक्षितो भवत्येवेत्यनुमीयत एव हि
अन्यथा नाट्यनारीणां प्रेषणं न पुनः पुनः। पुनःपुनःफलान्नादिपदार्थप्रेषणं
गन्धस्समागतः कोऽपि गन्धः पूर्वविलक्षणः। पक्वान्नानामनन्तानामपूर्वाणां वि
पक्वान्नकरणायासो न शिवस्य कदापि च। तदिच्छया परं सृष्टिस्तेषां तु स्यादनु
प्रसूनानि प्रेषितानि महादेवेन सादरम्। विलक्षणानि तद्गन्धः कथमत्रानुभूयते।
ब्रह्माण्डमण्डलं व्याप्नोत्ययं गन्धो विलक्षणः। पुष्पवृष्टिर्गन्धवृष्टिश्शङ्करेण कृता
न कल्पतरुपुष्पेषु सुगन्धोपीदृशः खलु। अस्य गन्धस्य महिमा शिवेन ज्ञायते
महेशसृष्टिचातुर्यमिदमत्रानुभूयते। अतस्तेन विलम्बाय सृष्टिरेवं प्रकल्पिता ॥
सहस्रशःप्रयास्यन्तिब्रह्मकल्पास्तथाप्ययम्। नाट्योत्सवोनशांतस्स्यादधुनाभिन
नाट्येनाभिनवेनायं नूतनाभिनयोत्सवः। पुनःपुनर्भवत्येव नवनाट्यविलोकनम्
नारीणां नाट्यसामान्यविलोकनरतिर्नवा। किं पुनर्नाट्यभेदानामवलोकनसम्भ्र
अतः परं महेशेन नाट्यनारीगणो यदि । न प्रेष्यते तदा तावन्निर्विघ्नगतिरम्बि
वान्त्येते पवना मन्दाः प्रसूनासारसंभृताः। मरन्दवृष्टिरधुना प्रकृष्टा दृष्टिगोचरा
चिरं जीवतु वातोऽयमसारासारसङ्गमः। गन्धोऽपि नाट्यं गानंच किमस्माकमितं
स्वयंविलम्बंसोढ्वापिविलम्बस्यास्यकारणम्। प्रेरय त्वम्बिकानाथःकिमम्बापिका
अत्राभिनवनाट्यस्य प्रसङ्गोऽपि न चेद्यदि। तदा प्रविष्टमेव स्यादम्बया शिवमन्
किञ्चावगणना तावदम्बया न कृताधुना । नाट्यस्यास्य महेशेन प्रेषितस्यादरः
नाट्यानादरमात्रेण शङ्करानादरो यदि। तदा कठिनमित्येव कृतं नाट्यावलोक
अनादरस्य विषयोऽप्येतन्नाट्यं न सर्वथा। अपूर्वस्यास्य नाट्यस्य कथंवा स्याद
नाट्यकोलाहलस्यापि श्रवणं मङ्गलायते। नाट्यावलोकनरसो वर्णनाविषयोऽपि

एतन्नाट्यविलोकनं श्रममहाम्भोधेर्महावाडवो-
ह्यानन्दाब्धिसुधाकरश्शिवगणाशास्यश्शिवाशास्यताम् ।
प्राप्तः प्रापकएव दीर्घसुकृताम्भोधेरयं वर्णना
मार्गातीत इति श्रमोऽपि न तथा तद्वर्णनाभ्युद्यमे ॥ ५९ ॥

सामर्थ्यं गिरिशस्य किं मुनिगणावेद्यं प्रकृष्टं परं
तन्नाट्यैः प्रकटीकृतं पटुतरा सृष्टिः क्व वा तादृशी ।
मायामात्रमिदं न येन विपुलाविद्याविलासो भवे-
त्सोऽयं शर्वविलास एव सकलः कोऽन्यो विलासो भवेत् ॥ ६० ॥

भाग्यं तावदिहेदृशं सुरगणाशास्यं स्वतो दुर्लभं
श्रुत्यन्तैरपि सर्वथा न विदितं देवैर्मुनीन्द्रैरपि ।
गन्धर्वैरपि किन्नरैरपि तथा न गेश्वरैरप्ययं
सन्तोषो ननु भूत इत्यनुदिनं नाट्योत्सवो मृग्यते ॥ ६१ ॥

वार्ता सेयमुमासहायनिकटे यास्यत्ययं सर्वथा
नाट्यानन्दसुधार्णवः प्रतिपदं वृद्धिं प्रयास्यत्ययम् ।
विघ्नायागमने गिरीन्द्रतनया सङ्गेऽधुना दुर्लभो
विघ्नध्वान्तनिवारकोऽपि जगतीपृष्ठे न दृष्टः पुनः ॥ ६२ ॥

विघ्नेशोऽपि न शक्त एव सहसा नाट्योत्सवध्वंसने
तन्नाट्यस्य विनाशनाय स कथं यत्नं करिष्यत्यपि ।
नाट्योत्साहविघातकस्तदितरः को वा जगन्मण्डले
शुण्डादण्डविराजितः खलु महाडुण्डिस्स नाट्योद्यतः ॥ ६३ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे नन्दिकेशगणसंवादो नाम
नवमोऽध्यायः ॥ ९ ॥

---

गणेशकृतरुद्रोकस्तुतिर्नाम दशमोऽध्यायः

व्यासः—

शिवानागमनं दृष्ट्वा शङ्करो लोकशङ्करः ॥

शिवः—

तद्विलम्बस्यकिंबीजंप्रायश्श्रान्तापथिप्रिया । प्रायस्सूरकराघातःपथिवृत्तोऽन्य
अनागमनमेतस्याःकोमलावयवा शिवा । शिरीषप्रसवस्यापि मार्दवं तादृशं न हि
यादृशं गिरिजादेहे सुगन्धपरिवेष्टिते । गिरिजादेहसम्बन्धमार्दवश्रवणेन किम्
शिरीषकुसुमं प्राप महारण्यतरुं परम् । क वा शिरीष कुसुमं क शिवादेहमार्दव
कियदन्तरमेतस्यास्तस्यापि मृदुलान्वये । कैलासदुर्गमार्गस्य भास्करस्स्वकरैः
चकार खलु दुर्गत्वं दुर्गत्वञ्च गिरेरपि । तन्मार्गेविरजाकान्तिःप्रवृत्ताप्रायशस्त
श्रान्तासागिरिजातान्तानितान्ततनुकोमला । सुधाकरकराणाञ्च मृदुलत्वं न ता
ततस्सा श्रान्तिमापन्ना मार्गो दूरतरोऽप्ययम् । अमन्दवातसङ्गो वा तद्विमानेन
तदा घातेन वा श्रान्ता सा परं सर्वमङ्गला । यद्वाचामरवातानाममन्दानांप्रसार
श्रान्ता तावन्नविश्रान्ताकिंतदाश्रान्तिसाधनम् । न तदाप्तजनस्तत्र श्रमापहरण
विना तेन कथं मार्गे समायास्यति शाम्भवी । मेनका किं परित्यक्ता तया कैलासमं
सा चेत्सह समायातितदाखलुनसंभ्रमः । तया विना नोपहारं गौर्यै का वा सम
उपहारादरा गौरी सानुवारमितिश्रुतम् । सासुप्ताकिंपरिश्रान्तास्वभावेनालसापर
चिन्तयावापरिश्रान्ताकिंतयाचिन्तयाफलम् । श्रान्तायाःपथिविश्रामोजननीजन
पतिसङ्गेन वानूनं स न तेनविनाभवेत् । चिरं सम्भ्रमसक्रान्ता मेनया सह स
तद्वियोगेन वा श्रान्ताकोमलंतन्मनोऽपि हि । मयापि तावन्नगतं यत्र सा गिरि
तत्राभ्याशे सहायेन सुखागमनमिच्छति । यद्यप्येषा गिरिसुता तथापि कठिना
दृष्टापि बहुधा कालेगिरिजाकोमलालता । तपस्यया तनुर्दूना भवान्याः पूर्वमेव
तान्तानितान्तमधुना श्रान्ता पथिविशेषतः । तपसा दूनदेहाया गौर्यास्तनुवि
अद्यापि न भवत्येव श्रान्ता पथिविशेषतः । तयाप्युग्रतपः पूर्वं तन्न तावत्कृतं ख
तस्यास्तनुस्तनुस्तावत्तनुतामगमत्पुनः । अतः परं मया तावत्तत्र गन्तुं न शक्य

१. लतान्तेति पाठः ।

वक्तुमप्यधुना शक्तिस्तदनागमनान्नमे। न तदाप्तमुखाद्वार्ता काप्यत्र श्रूयते मया॥२२
कस्याप्यागमनं नास्ति यतो दूरतरंस्थलम्। आवासोऽप्युचितोनात्रवार्तानागमनादिह
यत्रवार्ताप्रसारस्स्यात्तत्रावस्थानमीप्सितम्। प्रतिक्षणं प्रियावार्ता प्रियेण श्रूयते यदि॥
तदा प्रिया प्रीतचित्ताविश्रान्तिमुपयास्यति। अवैराग्यादयं सर्वो विचारःक्रियतेऽधुना
भार्या चर्याविचारोऽपिविरक्तस्य कथंभवेत्। वैराग्यं परमं भाग्यं तद्भाग्यमतिदुर्लभम्॥
अत एव विचारोऽयं क्रियतेऽपिप्रतिक्षणम्। किञ्चापरिग्रहः पूर्वं न कृतस्सकृतो यदि॥
तत्पालनपरित्यागे प्रत्यवायोऽपि जायते। न साध्वी युवती त्याज्या तन्मनोरक्षणं क्षणम्
क्षणार्धं वा यदि कृतं तेन न प्रत्यवैत्ययम्। ऋतुकालाभिगमनं ब्रह्मचर्यमितिश्रुतम्॥
तदभावे प्रत्यवैति तेन नैव तपःक्षतिः। प्रत्यक्षतश्श्रूयमाणा प्रजातन्तुमितिश्रुतिः॥३०॥
भार्यासङ्गपरित्यागे दूना किं न भविष्यति। विशेषतस्तपः प्राप्तं भर्तृत्वं तस्य पालनम्॥
भार्यापालनमात्रेण तन्नतेन विना भवेत्। गौरीविशालनयनभ्रमणभ्रमणोत्सवः॥३२
मन्मुखाम्भोजमासाद्य सत्रस्सम्प्रतिवर्धताम्। मयापि तावदधुना तदागमनहेतवः॥३३
न दृश्यन्ते तद्विलम्बे बीजं किमिति चिन्त्यते॥ ३४॥

व्यासः—

इति सञ्चिन्त्य सस्मार कुमारं गणनायकम्। ततः परं स विघ्नेशस्सत्वरं हृष्टमानसः॥

विघ्नेशः—

सन्तोषकारणं किं वा विलक्षणमिहाधुना। आनन्दोवर्धते सोऽयं सुधानिधिपराक्रमः॥
प्रायस्स्मरहरः किं मां सस्मार स्मेरपूर्वकम्। अन्यथा कथमेतावानानन्दाब्धिः प्रवर्धते॥
चिह्नान्यपि मनोज्ञानि दृश्यन्ते शिवदर्शने। साम्बदर्शनमस्याद्य भविष्यति न संशयः॥
पुण्यानां परिपाकोऽयमधुना समुपस्थितः। यत्पादपद्मं भक्त्याद्य दृष्ट्वा प्रीतो भवाम्यहम्
वेदान्तैरपि तत्तावददृष्टं कष्टनाशनम्। द्रष्टव्यमधुना रम्यं रमणीयमनुत्तमम्॥ ४०॥
रमणीयानि दृष्टानि वस्तूनि विविधान्यपि। न तत्तुल्यं क्वापि दृष्टं दुरदृष्टविनाशकम्॥
वाञ्छन्ति यत्पदाम्भोजं द्रष्टुं नारायणादयः। तैर्नदृष्टं न केनापि द्रष्टव्यमपि तत्परम्॥
तपसा नातिघोरेण धर्मैर्वा विविधैरपि। परन्तु तद्भवत्वद्य शङ्करानुग्रहान्मम॥ ४३॥

व्यासः—

इत्युक्त्वासत्वरंसाम्बं स्मृत्वाशङ्करपादुके। ध्यात्वाययौ गणाधीशश्शिवसन्निधिमादरात्

ततः प्रणम्य बहुधा कृताञ्जलिपुटः प्रभुम्। शम्भुं स्तोतुं मतिं चक्रे सर्वाभीष्टप्रदायकम्
गणाधीशः—
नमस्ते देवदेवाय नमस्ते रुद्रमन्यवे। नमस्ते चन्द्रचूडायाप्युतोत इषवे नमः ॥ ४६
नमस्ते पार्वतीकान्त नमस्ते मेरुधन्वने। नमस्ते भगवञ्छम्भो बाहुभ्यामुत ते नमः
इषुश्शिवतमा या ते तया मृडय रुद्र माम्। शिवं धनुर्यद्बभूव तेनापि मृडयाधुना॥४८
शरव्या या शिवतमा तयापि मृडय प्रभो। या ते रुद्र शिवा नित्यं सर्वमङ्गलसाधनम्
तयाभिचाकशीहि त्वं तनुवा मामुमापते। अघोरयापि तनुवा रुद्राघ्रापापकाशिनी।
या तया मृडय स्वामिन्त्सदा शन्तमया प्रभो। गिरिशं त महारुद्र हस्ते यामिषुमस्तवे
बिभर्षि तां गिरित्राद्य शिवां कुरु शिवापते। शिवेन वचसा रुद्र नित्यं त्वाच्छावदामि
त्वद्भक्तिपरिपूताङ्गं माहिंसीः पुरुषं जगत्। यन्नश्शर्व जगत्सर्वमयक्ष्मं सुमना असत्
यथा तथाव मां रुद्र तदन्यदपि मे प्रभो। रुद्रत्वं प्रथमो दैव्यो भिषक्पापविनाशकः
अधिवक्ताध्यवोचन्मांभवलिङ्गार्चकंमुदा। अहीन्त्सर्वान्यातुधान्यस्सर्वा अप्यत्रजम्भय
असौ ताम्रोऽरुणो बभ्रुर्नीलग्रीवस्सुमङ्गलः। विलोहितोस्त्ययं शम्भो त्वदधिष्ठानमेव
नमो नमस्ते भगवन्नीलग्रीवाय मीढुषे। सहस्राक्षाय शुद्धाय सच्चिदानन्दमूर्तये ॥५७
उभयोरार्त्नियोर्ज्याया धन्वनस्तां प्रमुञ्च ताम्। सम्प्राप्य धनुरन्येषां भयाय प्रभविष्णवे
अस्मद्भयविनाशार्थमधुनाभयद प्रभो। याश्च ते हस्त इषवः परा ता भगवो वप॥५९
अवतत्य धनुस्तत्त्वं सहस्राक्ष शतेषुधे। मुखा निशीर्य शल्यानां शिवो नस्सुमना भव।
विज्यं धनुरिदं भूयाद्विशल्यो बाणवानपि। अनेशन्निषवोऽप्यस्याप्याभुरस्य निषङ्गथिः
कपर्दिनो महेशस्य यदि नाभुर्निषङ्गथिः। इषवोऽपि समर्थाश्चेत्साग्रत्वेन भयं भवेत्॥६
या ते हेतिर्धनुर्हस्ते मीढुष्टम बभूव या। तयास्मान्विश्वतस्तेन पालय त्वमयक्ष्मया॥६
अनातताययुधाय नमस्ते धृष्णवे नमः। बाहुभ्यां धन्वने शम्भो नमो भूयो नमोनमः
परि ते धन्वनो हेतिर्विश्वतोऽस्मान्वृणक्तु सः। इषुधिस्तव यस्तावदस्मदारे निधेहि तम्
हिरण्यबाहवे तुभ्यं सेनान्ये ते नमोनमः। दिशाञ्च पतये तुभ्यं पशूनां पतये नमः॥
त्विषीमते नमस्तुभ्यं नमस्सस्पिञ्जराय ते। नमः पथीनां पतये बभ्लुशाय नमोनमः॥
नमो विव्याधिनेऽन्नानां पतये प्रभवे नमः। नमस्ते हरिकेशाय रुद्रायास्तूपवीतिने॥६८

ष्टानां पतये तुभ्यं जगतां पतये नमः। संसारहेतिरूपाय रुद्रायाप्याततायिने ॥६९॥
त्राणां पतये तुभ्यं सूताय सुकृतात्मने। अहन्त्याय नमस्तुभ्यं वनानां पतये नमः ॥
ोहिताय स्थपतये मन्त्रिणे वाणिजाय च। कक्षाणां पतये तुभ्यं नमस्तुभ्यं भुवन्तये॥
द्वारिवस्कृतायास्तु महादेवाय ते नमः। ओषधीनाञ्च पतये नमस्तुभ्यं महात्मने॥
उच्चैर्घोषाय धीराय धीराक्रंदयते नमः। पत्तीनां पतये तुभ्यं कृत्स्नवीताय ते नमः ॥
धावते धवलायापि सत्वनां पतये नमः। नमस्ते सहमानाय तुभ्यं विव्याधिने नमः
आव्याधिनीनां पतये ककुभाय निषङ्गिणे। स्तेनानां पतये तुभ्यं दिव्येषुधिमते नमः
तस्कराणाञ्च पतये वञ्चते परिवञ्चते। स्तायूनां पतये तुभ्यं नमस्तेऽस्तु निचेरवे ॥
नमः परिचरायापि महारुद्राय ते नमः। अरण्यानाञ्च पतये मुष्णतां पतये नमः ॥
उष्णीषिणे नमस्तुभ्यं नमो गिरिचराय ते। कुलुञ्चानां च पतये नमस्तेऽस्तु भवाय च
नमो रुद्राय शर्वाय तुभ्यं पशुपते नमः। नम उग्राय भीमाय नमो अग्रेवधाय च ॥
नमो दूरेवधायापि नमो हन्त्रे नमोनमः। हनीयसे नमस्तुभ्यं नीलग्रीवाय ते नमः ॥
नमस्ते शितिकण्ठाय नमस्तेऽस्तु कपर्दिने। नमस्ते व्युप्तकेशाय सहस्राक्षाय मीढुषे॥
गिरिशाय नमस्तेऽस्तु शिपिविष्टाय ते नमः। नमस्ते शम्भवे तुभ्यं मयोभव नमोऽस्तु ते
मयस्कर नमस्तुभ्यं शङ्कराय नमोनमः। नमश्शिवाय शर्वाय नमश्शिवतराय च॥८३
नमस्तीर्थ्याय कूल्याय नमः पार्याय ते नमः। अवार्याय नमस्तेऽस्तु नमः प्रतरणायच
नम उत्तरणायापि हरातार्याय ते नमः। आलाद्याय नमस्तेऽस्तु भक्तानां वरदाय च
नमश्शष्प्याय फेन्याय सिकत्याय नमोनमः। प्रवाह्याय नमस्तेऽस्तु ह्रस्वायास्तु नमोनमः
वामनाय नमस्तेऽस्तु नमोऽस्तु बृहते नमः। वर्षीयसे नमस्तेऽस्तु नमो वृद्धाय ते नमः
संवृध्वने नमस्तुभ्यमग्रियाय नमोनमः। प्रथमाय नमस्तुभ्यमाशवेचाजिराय च॥८८
शीघ्रियाय नमस्तुभ्यं शीभ्याय च नमोनमः। नमऊर्म्याय शर्वायाप्यवस्वन्याय ते नमः
स्रोतस्याय नमस्तुभ्यं द्वीप्याय च नमोनमः । ज्येष्ठाय च नमस्तुभ्यं कनिष्ठाय च ते नमः
पूर्वजाय नमस्तुभ्यं नमोस्त्वपरजाय च। मध्यमाय नमस्तुभ्यमपगल्भाय ते नमः ॥
जघन्याय नमस्तुभ्यं बुध्नियाय नमोनमः। सोभ्याय प्रतिसर्याय याम्याय च नमोनमः॥
क्षेम्याय च नमस्तुभ्यं याम्याय च नमोनमः। उर्वर्याय नमस्तुभ्यं खल्याय च नमोनमः

श्लोक्याय चावसान्यायावस्वन्याय चतेनमः। नमोवन्यायकक्ष्यायमौञ्जायचनमो
श्रवाय च नमस्तुभ्यं प्रतिश्रव नमोनमः। आशुषेणाय शूराय नमोऽस्त्वाशुरथा
वरूथिने वर्मिणे च विल्मिने च नमोनमः। श्रुताय श्रुतसेनाय नमः कवचिने न
दुन्दुभ्याय नमस्तुभ्यमहनन्याय ते नमः। प्रहिताय नमस्तुभ्यं धृष्णवे प्रहिता
पाराय पारविन्दाय नमस्तीक्ष्णेपवे नमः। सुधन्वने नमस्तुभ्यं स्वायुधाय नमो
नमस्स्रुत्याय पथ्याय नमःकाट्याय ते नमः। नमो नीप्याय सूद्याय सरस्याय चते
नमो नाद्याय भव्याय वैशन्ताय च ते नमः। अवट्याय नमस्तुभ्यं नमःकूप्यायते
अवर्ष्याय च वर्ष्याय मेघ्याय च नमोनमः। विद्युत्याय नमस्तुभ्यमीध्रियाय नमोन
आतप्याय नमस्तुभ्यं वात्याय च नमोनमः। रेष्मियाय नमस्तुभ्यं वास्तव्याय च ते
वास्तुपाय नमस्तेऽस्तु नमस्सोमाय ते नमः। नमो रुद्राय ताम्रायाप्यरुणाय च ते नमः
नम उग्राय भीमाय नमश्शङ्गाय ते नमः। नमस्तीर्थ्याय कूल्याय सिकत्याय नमो
प्रवाह्याय नमस्तुभ्यमिरिण्याय च ते नमः। नमस्ते चन्द्रचूडाय प्रपथ्याय च ते नमः
किंशिलाय नमस्तेऽस्तु क्षयणाय च ते नमः। कपर्दिने नमस्तेऽस्तु नमस्तेऽस्तु पुलस्त
नमो गोष्ठ्याय गृह्याय ग्रहाणां पतये नमः। नमस्तल्प्याय गेह्याय गुहावासाय ते नमः
काट्याय गह्वरेष्ठाय हृदय्याय च ते नमः। निवेष्प्याय नमस्तुभ्यं पांसव्याय च ते न
रजस्याय नमस्तुभ्यं परात्परतराय च। नमस्ते हरिकेशाय शुष्क्याय च नमोनमः
हरित्याय नमस्तुभ्यं हरिद्वर्णाय ते नमः। नम ऊर्म्याय सूर्म्याय पर्ण्याय च नमोन
नमोऽपगुरमाणाय पर्णशद्याय ते नमः। अभिघ्नते चाक्खिदते नमः प्रक्खिदते नमः
विश्वरूपाय विश्वाय विश्वाधाराय ते नमः। त्रियम्बकाय रुद्राय गिरिजापतये न
मणिकोटीरकोटिस्थकान्तिदीप्ताय ते नमः। वेदवेदान्तवेद्याय वृषारूढाय ते नमः
अविज्ञेयस्वरूपाय सुन्दराय नमोनमः। उमाकान्तनमस्तेऽस्तु नमस्ते सर्वसाक्षि
हिरण्यबाहवे तुभ्यं हिरण्याभरणाय च। नमोहिरण्यरूपाय रूपातीताय ते नमः।
हिरण्यपतये तुभ्यमम्बिकापतये नमः। तदुमापतये तुभ्यं नमः पापप्रणाशक ॥ ११
मीढुष्टमाय भर्गाय कद्रुद्राय प्रचेतसे। तव्यसे बिल्वपूज्याय नमः कल्याणरूपिणे

अपारकल्याणगुणार्णवाय श्रीनीलकण्ठाय निरञ्जनाय।
कालान्तकायापि नमो नमस्ते दिक्कालरूपाय नमो नमस्ते ॥ ११८ ॥

स्मिन्मुहूर्ते सा सृष्टा समुहूर्तोऽपि दुर्लभः। मुहूर्ते महिमा को वा सा सृष्टिस्तावदद्भुता॥
ो मुहूर्तोऽपि मया सुमुहूर्तो विलक्षणः। तन्मुहूर्तसमानस्तु मुहूर्तोऽपि न दृश्यते ॥१२
त्कल्पोऽपि कल्पान्ते कल्पमध्येऽपि दुर्लभः। कल्पादिरयमेतस्मिन्त्समयेदृश्यतेऽपिन

व्यासः—

युक्तं तद्वचश्श्रुत्वा नन्दिकेशादयो गणाः। परस्परं मुखं दृष्ट्वा विचारं चक्रुरादरात् ॥

नन्दीश्वरः—

यमुक्तं महेशेन तत्कार्यं तदपेक्षितम्। विलक्षणमिदं कार्यं कर्तुमेव न शक्यते ॥१४॥
ा देवगणास्सर्वे तृणेनैकेन तन्तुना। बिसवल्या निबद्धाश्च सामर्थ्यं तादृशं मम॥१५
ुकान्तस्स्थितास्सर्वेसागरास्सरितस्तथा। सरांसिच तथान्यच्चजलम्मुक्ताफलाकृति
त्वाग्रनिपातेन कम्पयन्ते सुरा अपि। ब्रह्माण्डखण्डलं सर्वमणुकल्पं कृतं मया॥१७॥
दृत्यभृत्यभृत्योऽपि ब्रह्मविष्ण्वादिपूजितः। तं दृष्ट्वापि सकम्पास्ते किमिहागत इत्यपि
ागमनवेलायां कृताञ्जलिपुटास्तदा। दण्डवत्प्रणता एव भवन्ति सदरास्सुराः ॥१९
मर्थ्यमीदृशं सर्वं महेशस्यैव यद्यपि। तथापि तत्कृपालेशादभिमानो ममेदृशः ॥२०
ावकिङ्करभावेन मम सामर्थ्यमीदृशम्। तथापि किं करोम्यत्र सामर्थ्यं कुण्ठितं मम ॥
ण्ठिते सति सामर्थ्ये कार्योत्कण्ठा न जायते। अतस्तत्कार्यकरणं दुर्लभञ्चाधुना मम॥
म्त्वा प्रभुत्वं कास्माकं तत्कार्यकरणोद्यमः। महाप्रभुर्महादेवः किन्नजानाति तद्द्वयम् ॥
त्वापि स महादेवो महाप्रभुरिति स्वयम्। अस्मानाज्ञापयत्येव महद्भाग्यमिदं खलु ॥
हमादौ प्रेपितोऽस्मि ततः प्रचलिता शिवा। सोत्कण्ठया परं तत्र न कृत्यं मम सर्वथा
ातिस्वातन्त्र्यमीशेन गौर्यास्तावद्विनिश्चितम्। नान्याज्ञावशगा गौरी स शिवानुग्रहस्तथा
हेश्वरानुग्रहस्य किमशक्यं जगत्त्रये। तदनुग्रहपात्रत्वं दुर्लभं जगतीतले॥ २७ ॥
ावानुग्रहमप्राप्य तावन्नारायणादयः। तपस्याकरणोद्युक्तास्सर्वेऽपि गिरिकन्धरे॥२८
ध्ये समागताः केचिद्भवद्भिरधुना गणाः। समागतं किमेतेन भवदागमनेन तु ॥२९
ाट्यावलोकनोद्युक्ता गिरिराजकुमारिका। भवदागमनं तावत्तया न ज्ञायते खलु ॥
तन्नाट्यसमारम्भः क गणागमनादरः। भवदागमनेनापि न कार्यं भावि दृश्यते॥ ३१
वतांगणना कुत्र मम चान्यस्य चाधुना। कोटिशो वा समायान्तु गणाः किं तैःप्रयोजनम्
गणानां प्रवेशोऽस्ति तन्नारीनाट्यमण्टपे। तद्द्वारदेशेऽपि गतिरस्माकमतिदुर्लभा॥३३

6 C

पुनःपुनस्समायान्ति तत्र नाट्याङ्गनाः किल । गतिर्गानानुमानेन नूतनेनानुमीय
गणाश्शृण्वन्तु तद्गानं नानुभूतं पुरा मया । नान्यैर्विघ्नेश्वराद्यैर्वा महेशेनापि वा
सृष्टास्ताश्शङ्करेणैव गाननाट्यविशारदाः । तिरस्कारश्शारदायाः परं ताः कर्तुं
क्व शारदा क्व कमला क्व तदन्यामराङ्गनाः । तद्गन्धगन्धगन्धोऽपि किमत्र प्रसरिष्यति
गाननाट्यविलोलायाःपार्वत्याश्चलने यदि । विलम्बस्तावता कावा स्यादस्माकंवि
अयं विलम्बो देवस्य महादेवस्य सर्वथा । अपेक्षितो भवत्येवेत्यनुमीयत एव हि
अन्यथा नाट्यनारीणां प्रेषणं न पुनः पुनः । पुनःपुनःफलान्नादिपदार्थप्रेषणं क्व
गन्धस्समागतः कोऽपि गन्धः पूर्वविलक्षणः । पक्वान्नानामनन्तानामपूर्वाणां वि
पक्वान्नकरणायासो न शिवस्य कदापि च । तदिच्छया परं सृष्टिस्तेषां तु स्यादनु
प्रसूनानि प्रेषितानि महादेवेन सादरम् । विलक्षणानि तद्गन्धः कथमत्रानुभूयते ॥
ब्रह्माण्डमण्डलं व्याप्नोत्ययं गन्धो विलक्षणः । पुष्पवृष्टिर्गन्धवृष्टिश्शङ्करेण कृता
न कल्पतरुपुष्पेषु सुगन्धोपीदृशः खलु । अस्य गन्धस्य महिमा शिवेन ज्ञायते प
महेशसृष्टिचातुर्यमिदमत्रानुभूयते । अतस्तेन विलम्बाय सृष्टिरेवं प्रकल्पिता ॥
सहस्रशःप्रयास्यन्तिब्रह्मकल्पास्तथाप्ययम् । नाट्योत्सवोनशांतस्स्यादधुनाभिन
नाट्येनाभिनवेनायं नूतनाभिनयोत्सवः । पुनःपुनर्भवत्येव नवनाट्यविलोकनम् ॥
नारीणां नाट्यसामान्यविलोकनरतिर्नवा । किं पुनर्नाट्यभेदानामवलोकनसम्भ्र
अतः परं महेशेन नाट्यनारीगणो यदि । न प्रेष्यते तदा तावन्निर्विघ्नगतिरम्बिक
वान्त्येते पवना मन्दाः प्रसूनासारसंवृताः । मरन्दवृष्टिरधुना प्रकृष्टा दृष्टिगोचरा ॥
चिरं जीवतु वातोऽयमसारासारसङ्गमः । गन्धोऽपि नाट्यं गानंच किमस्माकमितो
स्वयंविलम्बंसोढ्वापिविलम्बस्यास्यकारणम् । पूरय त्वम्बिकानाथःकिमम्बापिकरि
अत्राभिनवनाट्यस्य प्रसङ्गोऽपि न चेद्यदि । तदा प्रविष्टमेव स्यादम्बया शिवमन्दि
किञ्चावगणना तावदम्बया न कृताधुना । नाट्यस्यास्य महेशेन प्रेषितस्यादरः क्व
नाट्यानादरमात्रेण शङ्करानादरो यदि । तदा कठिनमित्येव कृतं नाट्यावलोकन
अनादरस्य विषयोऽप्येतन्नाट्यं न सर्वथा । अपूर्वस्यास्य नाट्यस्य कथंवा स्यादन
नाट्यकोलाहलस्यापि श्रवणं मङ्गलायते । नाट्यावलोकनरसो वर्णनाविषयोऽपि

एतन्नाट्यविलोकनं श्रममहाम्भोधेर्महावाडवो-
ह्यानन्दाब्धिसुधाकरश्शिवगणाशास्यश्शिवाशास्यताम् ।
प्राप्तः प्रापकएव दीर्घसुकृताम्भोधेरयं वर्णना
मार्गातीत इति श्रमोऽपि न तथा तद्वर्णनाभ्युद्यमे ॥ ५९ ॥

सामर्थ्यं गिरिशस्य किं मुनिगणावेद्यं प्रकृष्टं परं
तन्नाट्यैः प्रकटीकृतं पटुतरा सृष्टिः क्व वा तादृशी ।
मायामात्रमिदं न येन विपुलाविद्याविलासो भवे-
त्सोऽयं शर्वविलास एव सकलः कोऽन्यो विलासो भवेत् ॥ ६० ॥

भाग्यं तावदिहेदृशं सुरगणाशास्यं स्वतो दुर्लभं
श्रुत्यन्तैरपि सर्वथा न विदितं देवैर्मुनीन्द्रैरपि ।
गन्धर्वैरपि किन्नरैरपि तथा न.गेश्वरैरप्ययं
सन्तोषो ननु भूत इत्यनुदिनं नाट्योत्सवो मृग्यते ॥ ६१ ॥

वार्ता सेयमुमासहायनिकटे यास्यत्ययं सर्वथा
नाट्यानन्दसुधार्णवः प्रतिपदं वृद्धिं प्रयास्यत्ययम् ।
विघ्नायागमने गिरीन्द्रतनया सङ्गेऽधुना दुर्लभो
विघ्नध्वान्तनिवारकोऽपि जगतीपृष्ठे न दृष्टः पुनः ॥ ६२ ॥

विघ्नेशोऽपि न शक्त एव सहसा नाट्योत्सवध्वंसने
तन्नाट्यस्य विनाशनाय स कथं यत्नं करिष्यत्यपि ।
नाट्योत्साहविघातकस्तदितरः को वा जगन्मण्डले
शुण्डादण्डविराजितः खलु महाडुण्डिस्स नाट्योद्यतः ॥ ६३ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे नन्दिकेशगणसंवादो नाम
नवमोऽध्यायः ॥ ९ ॥

---

गणेशकृतरुद्रोक्तस्तुतिर्नाम दशमोऽध्यायः

व्यासः—

शिवानागमनं दृष्ट्वा शङ्करो लोकशङ्करः ॥

शिवः—

तद्विलम्बस्यकिंबीजंप्रायश्श्रान्तापथिप्रिया । प्रायस्सूरकराघातःपथिवृत्तोऽन्यथ
अनागमनमेतस्याःकोमलावयवा शिवा । शिरीषप्रसवस्यापि मार्दवं तादृशं न हि
यादृशं गिरिजादेहे सुगन्धपरिवेष्टिते । गिरिजादेहसम्बन्धमार्दवश्रवणेन किम् ॥
शिरीषकुसुमं प्राप महारण्यतरुं परम् । क वा शिरीष कुसुमं क शिवादेहमार्दवम्
कियदन्तरमेतस्यास्तस्यापि मृदुलान्वये । कैलासदुर्गमार्गस्य भास्करस्स्वकरैः प
चकार खलु दुर्गत्वं दुर्गत्वञ्च गिरेरपि । तन्मार्गेविरजाकान्तिःप्रवृत्ताप्रायशस्तथा
श्रान्तासागिरिजातान्तानितान्ततनुकोमला । सुधाकरकराणाञ्च मृदुलत्वं न ताह
ततस्सा श्रान्तिमापन्ना मार्गो दूरतरोऽप्ययम्। अमन्दवातसङ्गो वा तद्विमानेन भू
तदा वातेन वा श्रान्ता सा परं सर्वमङ्गला। यद्वाचामरवातानाममन्दानांप्रसारतः
श्रान्ता तावन्नविश्रान्ताकिंतदाश्रान्तिसाधनम् । न तदाप्तजनस्तत्र श्रमापहरणक्ष
विना तेन कथं मार्गे समायास्यति शाम्भवी। मेनका किं परित्यक्ता तया कैलासमन्
सा चेत्सह समायातितदाखलुनसंभ्रमः । तया विना नोपहारं गौर्यै का वा समर्पं
उपहारादरा गौरी सानुवारमितिश्रुतम्।सासुसाकिंपरिश्रान्तास्वभावेनालसापरम्।
चिन्तयावापरिश्रान्ताकिंतयाचिन्तयाफलम्।श्रान्तायाःपथिविश्रामोजननीजनका
पतिसङ्गेन वानूनं स न तेनविनाभवेत् । चिरं सम्भ्रमसक्रान्ता मेनया सह सङ्गमेच
तद्वियोगेन वा श्रान्ताकोमलंतन्मनोऽपि हि । मयापि तावन्नगतं यत्र सा गिरिक
तत्राभ्याशे सहायेन सुखागमनमिच्छति । यद्यप्येषा गिरिसुता तथापि कठिना न
दृष्टापि बहुधा कालेगिरिजाकोमलालता । तपस्यया तनुर्दूना भवान्याः पूर्वमेव श
तान्तानितान्तमधुना श्रान्ता पथिविशेषतः । तपसा दूनदेहाया गौर्यास्तनुविजृम्भ
अद्यापि न भवत्येव श्रान्ता पथिविशेषतः । तयाप्युग्रतपः पूर्वं तन्न तावत्कृतं खलु॥
तस्यास्तनुस्तनुस्तावत्तनुतामगमत्पुनः। अतः परं मया तावत्तत्र गन्तुं न शक्यते॥

१. लतान्तेति पाठः ।

क्तुमप्यधुना शक्तिस्तदनागमनान्नमे । न तदाप्तमुखाद्वार्ता काप्यत्र श्रूयते मया॥२२
स्याप्यागमनं नास्ति यतो दूरतरंस्थलम् । आवासोऽप्युचितोनात्रवार्तानागमनादिह
त्रवार्ताप्रसारस्स्यात्तत्रावस्थानमीप्सितम् । प्रतिक्षणं प्रियावार्ता प्रियेण श्रूयते यदि॥
दा प्रिया प्रीतचित्ताविश्रान्तिमुपयास्यति । अवैराग्यादयं सर्वो विचारःक्रियतेऽधुना
र्या चर्याविचारोऽपिविरक्तस्य कथंभवेत् । वैराग्यं परमं भाग्यं तद्भाग्यमतिदुर्लभम्॥
ल एव विचारोऽयं क्रियतेऽपिप्रतिक्षणम् । किञ्चापरिग्रहः पूर्वं न कृतस्सकृतो यदि ॥
त्पालनपरित्यागे प्रत्यवायोऽपि जायते । न साध्वी युवती त्याज्या तन्मनोरक्षणं क्षणम्
णार्धं वा यदि कृतं तेन न प्रत्यवैत्ययम् । ऋतुकालाभिगमनं ब्रह्मचर्यमितिश्रुतम् ॥
द्भावे प्रत्यवैति तेन नैव तपःक्षतिः । प्रत्यक्षतश्श्रूयमाणा प्रजातन्तुमितिश्रुतिः॥३०॥
र्यासङ्गपरित्यागे दूना किं न भविष्यति । विशेषतस्तपः प्राप्तं भर्तृत्वं तस्य पालनम् ॥
र्यापालनमात्रेण तन्नतेन विना भवेत् । गौरीविशालनयनभ्रमणभ्रमणोत्सवः ॥३२
न्मुखाम्भोजमासाद्य सद्यस्सम्प्रतिवर्धताम् । मयापि तावदधुना तदागमनहेतवः॥३३
दृश्यन्ते तद्विलम्बे वीजं किमिति चिन्त्यते ॥ ३४ ॥

व्यासः—

ति सञ्चिन्त्य सस्मार कुमारं गणनायकम् । ततः परं स विघ्नेशस्सत्वरं हृष्टमानसः ॥

विघ्नेशः—

न्तोपकारणं किं वा विलक्षणमिहाधुना । आनन्दोवर्धते सोऽयं सुधानिधिपराक्रमः॥
यस्स्मरहरः किं मां सस्मार स्मेरपूर्वकम्। अन्यथा कथमेतावानानन्दाब्धिः प्रवर्धते॥
चेह्नान्यपि मनोज्ञानि दृश्यन्ते शिवदर्शने । साम्बदर्शनमस्याद्य भविष्यति न संशयः॥
ण्यानां परिपाकोऽयमधुना समुपस्थितः। यत्पादपद्मं भक्त्याद्य दृष्ट्वा प्रीतो भवाम्यहम्
दान्तैरपि तत्तावददृष्टं कष्टनाशनम्। द्रष्टव्यमधुना रम्यं रमणीयमनुत्तमम् ॥ ४० ॥
मणीयानि दृष्टानि वस्तूनि विविधान्यपि। न तत्तुल्यं क्वापि दृष्टं दुरदृष्टविनाशकम् ॥
ञ्छन्ति यत्पदाम्भोजं द्रष्टुं नारायणादयः। तैर्नदृष्टं न केनापि द्रष्टव्यमपि तत्परम् ॥
पसा नातिघोरेण धर्मैर्वा विविधैरपि। परन्तु तद्भवत्वद्य शङ्करानुग्रहान्मम ॥ ४३ ॥

व्यासः—

त्युक्त्वासत्वरंसाम्बं स्मृत्वाशङ्करपादुके। ध्यात्वाययौ गणाधीशश्शिवसन्निधिमादरात्

ततः प्रणम्य वहुधा कृताञ्जलिपुटः प्रभुम् । शम्भुं स्तोतुं मतिं चक्रे सर्वाभीष्टप्रदाय
गणाधीशः—
नमस्ते देवदेवाय नमस्ते रुद्रमन्यवे । नमस्ते चन्द्रचूडायाप्युतोत इषवे नमः ॥
नमस्ते पार्वतीकान्त नमस्ते मेरुधन्वने । नमस्ते भगवञ्छम्भो वाहुभ्यामुत ते न
इषुश्शिवतमा या ते तया मृडय रुद्र माम् । शिवं धनुर्यद्बभूव तेनापि मृडयाधुना॥
शरव्या या शिवतमा तयापि मृडय प्रभो । या ते रुद्र शिवा नित्यं सर्वमङ्गलसाधन
तयाभिचाकशीहि त्वं तनुवा मामुमापते । अघोरयापि तनुवा रुद्राद्यापापकाशिनी
या तया मृडय स्वामिन्त्सदा शन्तमया प्रभो । गिरिशं त महारुद्र हस्ते यामिषुमस्त
विभर्षि तां गिरित्राद्य शिवां कुरु शिवापते । शिवेन वचसा रुद्र नित्यं त्वाच्छावदा
त्वद्भक्तिपरिपूताङ्गं माहिंसीः पुरुषं जगत् । यन्नश्शर्व जगत्सर्वमयक्ष्मं सुमना अस
यथा तथाव मां रुद्र तदन्यदपि मे प्रभो । रुद्रत्वं प्रथमो दैव्यो भिषक्पापविनाशक
अधिवक्ताध्यवोचन्मांभवलिङ्गार्चकंमुदा । अहीन्त्सर्वान्यातुधान्यस्सर्वाअप्यद्यजम
असौ ताम्रोऽरुणो बभ्रुर्नीलग्रीवस्सुमङ्गलः । विलोहितोस्त्ययं शम्भो त्वदधिष्ठानमे
नमो नमस्ते भगवन्नीलग्रीवाय मीढुषे । सहस्राक्षाय शुद्धाय सच्चिदानन्दमूर्तये ॥
उभयोरार्त्नियोर्ज्याया धन्वनस्तां प्रमुञ्च ताम् । सम्प्राप्य धनुरन्येषां भयाय प्रभवि
अस्मद्भयविनाशार्थमधुनाभयद प्रभो । याश्च ते हस्त इषवः परा ता भगवो वप॥
अवतत्य धनुस्तत्त्वं सहस्राक्ष शतेषुधे । मुखा निशीर्य शल्यानां शिवो नस्सुमना भ
विज्यं धनुरिदं भूयाद्विशल्यो वाणवानपि । अनेशन्निषवोऽप्यस्याप्यासुरस्य निषङ्ग
कपर्दिनो महेशस्य यदि नासुर्निषङ्गथिः । इषवोऽपि समर्थाश्चेत्साग्रत्वेन भयं भवेत्
या ते हेतिर्धनुर्हस्ते मीढुष्टम बभूव या । तयास्मान्विश्वतस्तेन पालय त्वमयक्ष्मया॥
अनाततायायुधाय नमस्ते धृष्णवे नमः । वाहुभ्यां धन्वने शम्भो नमो भूयो नमो
परिते धन्वनो हेतिर्विश्वतोऽस्मान्वृणक्तु सः । इषुधिस्तव यस्तावदस्मदारे निधेहि
हिरण्यवाहवे तुभ्यं सेनान्ये ते नमोनमः । दिशाश्च पतये तुभ्यं पशूनां पतये नमः
त्विषीमते नमस्तुभ्यं नमस्सस्पिञ्जराय ते । नमः पथीनां पतये वभ्लुशाय नमोनमः
नमो विव्याधिनेऽन्नानां पतये प्रभवे नमः । नमस्ते हरिकेशाय रुद्रायास्तूपवीतिने॥

ष्टानां पतये तुभ्यं जगतां पतये नमः। संसारहेतिरूपाय रुद्रायाप्याततायिने ॥६९॥
त्राणां पतये तुभ्यं सूताय सुकृतात्मने। अहन्त्याय नमस्तुभ्यं वनानां पतये नमः ॥
हिताय स्थपतये मन्त्रिणे वाणिजाय च। कक्षाणां पतये तुभ्यं नमस्तुभ्यं भुवन्तये॥
द्वारिवस्कृतायास्तु महादेवाय ते नमः। ओषधीनाञ्च पतये नमस्तुभ्यं महात्मने॥
च्चैर्घोषाय धीराय धीराक्रंदयते नमः। पत्तीनां पतये तुभ्यं कृत्स्नवीताय ते नमः ॥
वते धवलायापि सत्वनां पतये नमः। नमस्ते सहमानाय तुभ्यं विव्याधिने नमः
ाव्याधिनीनां पतये ककुभाय निषङ्गिणे। स्तेनानां पतये तुभ्यं दिव्येषुधिमते नमः
स्कराणाञ्च पतये वञ्चते परिवञ्चते। स्तायूनां पतये तुभ्यं नमस्तेऽस्तु निचेरवे ॥
मः परिचरायापि महारुद्राय ते नमः। अरण्यानाञ्च पतये मुष्णतां पतये नमः ॥
ष्णीषिणे नमस्तुभ्यं नमो गिरिचराय ते। कुलुञ्चानां च पतये नमस्तेऽस्तु भवाय च
मो रुद्राय शर्वाय तुभ्यं पशुपते नमः। नम उग्राय भीमाय नमो अग्रेवधाय च ॥
मो दूरेवधायापि नमो हन्त्रे नमोनमः। हनीयसे नमस्तुभ्यं नीलग्रीवाय ते नमः ॥
मस्ते शितिकण्ठाय नमस्तेऽस्तु कपर्दिने। नमस्ते व्युप्तकेशाय सहस्राक्षाय मीढुषे॥
गिरिशाय नमस्तेऽस्तु शिपिविष्टाय ते नमः। नमस्ते शम्भवे तुभ्यं मयोभव नमोऽस्तु ते
यस्कर नमस्तुभ्यं शङ्कराय नमोनमः। नमश्शिवाय शर्वाय नमश्शिवतराय च॥८३
मस्तीर्थ्याय कूल्याय नमः पार्याय ते नमः। अवार्याय नमस्तेऽस्तु नमः प्रतरणायच
म उत्तरणायापि हरातार्याय ते नमः। आलाद्याय नमस्तेऽस्तु भक्तानां वरदाय च
र्मिमश्शष्प्याय फेन्याय सिकत्याय नमोनमः। प्रवाह्याय नमस्तेऽस्तु ह्रस्वायास्तु नमोनमः
वामनाय नमस्तेऽस्तु नमोऽस्तु बृहते नमः। वर्षीयसे नमस्तेऽस्तु नमो वृद्धाय ते नमः
संवृध्वने नमस्तुभ्यमग्रियाय नमोनमः। प्रथमाय नमस्तुभ्यमाशवेचाजिराय च॥८८
शीघ्रियाय नमस्तुभ्यं शीभ्याय च नमोनमः। नमऊर्म्याय शर्वायाप्यवस्वन्याय ते नमः
स्रोतस्याय नमस्तुभ्यं द्वीप्याय च नमोनमः। ज्येष्ठाय च नमस्तुभ्यं कनिष्ठाय च ते नमः
पूर्वजाय नमस्तुभ्यं नमोस्त्वपरजाय च। मध्यमाय नमस्तुभ्यमपगल्भाय ते नमः ॥
जघन्याय नमस्तुभ्यं बुध्नियाय नमोनमः। सोभ्याय प्रतिसर्याय याम्याय च नमोनमः॥
क्षेम्याय च नमस्तुभ्यं याम्याय च नमोनमः। उर्वर्याय नमस्तुभ्यं खल्याय च नमोनमः

श्लोक्याय चावसान्यायावस्वन्याय चतेनमः। नमोवन्याय कक्ष्याय मौञ्जाय चनमं
श्रवाय च नमस्तुभ्यं प्रतिश्रव नमोनमः। आशुषेणाय शूराय नमोऽस्त्वाशुर
वरूथिने वर्मिणे च विल्मिने च नमोनमः। श्रुताय श्रुतसेनाय नमः कवचिने
दुन्दुभ्याय नमस्तुभ्यमहनन्याय ते नमः। प्रहिताय नमस्तुभ्यं धृष्णवे प्रहित
पाराय पारविन्दाय नमस्तीक्ष्णेषवे नमः। सुधन्वने नमस्तुभ्यं स्वायुधाय नमं
नमस्स्रुत्याय पथ्याय नमःकाट्याय ते नमः। नमो नीप्याय सूद्याय सरस्याय चते
नमो नाद्याय भञ्याय वैशन्ताय च ते नमः। अवट्याय नमस्तुभ्यं नमःकूप्यायते
अवर्ष्याय च वर्ष्याय मेघ्याय च नमोनमः। विद्युत्याय नमस्तुभ्यमीध्रियाय नमो
आतप्याय नमस्तुभ्यं वात्याय च नमोनमः। रेष्मियाय नमस्तुभ्यं वास्तव्याय चते
वास्तुपाय नमस्तेऽस्तु नमस्सोमाय ते नमः। नमो रुद्राय ताम्रायाप्यरुणाय च ते
नम उग्राय भीमाय नमश्शङ्गाय ते नमः। नमस्तीर्थ्याय कूल्याय सिकत्याय नमं
प्रवाह्याय नमस्तुभ्यमिरिण्याय च ते नमः। नमस्ते चन्द्रचूडाय प्रपथ्याय च ते
किंशिलाय नमस्तेऽस्तु क्षयणाय च ते नमः। कपर्दिने नमस्तेऽस्तु नमस्तेऽस्तु पुल
नमो गोष्ठ्याय गृह्याय ग्रहाणां पतये नमः। नमस्तल्प्याय गेह्याय गुहावासाय ते
काट्याय गह्वरेष्ठाय हृदय्याय च ते नमः। निवेष्प्याय नमस्तुभ्यं पांसव्याय च ते
रजस्याय नमस्तुभ्यं परात्परतराय च। नमस्ते हरिकेशाय शुष्क्याय च नमो
हरित्याय नमस्तुभ्यं हरिद्वर्णाय ते नमः। नम ऊर्म्याय सूर्म्याय पर्ण्याय च नम
नमोऽपगुरमाणाय पर्णशद्याय ते नमः। अभिघ्नते चाक्खिदते नमः प्रक्खिदते न
विश्वरूपाय विश्वाय विश्वाधाराय ते नमः। त्रियम्बकाय रुद्राय गिरिजापतये
मणिकोटीरकोटिस्थकान्तिदीप्ताय ते नमः। वेदवेदान्तवेद्याय वृषारूढाय ते न
अविज्ञेयस्वरूपाय सुन्दराय नमोनमः। उमाकान्तनमस्तेऽस्तु नमस्ते सर्वसा
हिरण्यबाहवे तुभ्यं हिरण्याभरणाय च। नमोहिरण्यरूपाय रूपातीताय ते नम
हिरण्यपतये तुभ्यमम्बिकापतये नमः। तदुमापतये तुभ्यं नमः पापप्रणाशक ॥
मीढुष्टमाय भर्गाय कद्रुद्राय प्रचेतसे। तव्यसे बिल्वपूज्याय नमः कल्याणरू

अपारकल्याणगुणार्णवाय श्रीनीलकण्ठाय निरञ्जनाय।
कालान्तकायापि नमो नमस्ते दिक्कालरूपाय नमो नमस्ते ॥ ११८

वेदान्तवन्दिस्तुतसद्गुणाय गुणप्रवीणाय गुणाश्रयाय ।
श्रीविश्वनाथाय नमो नमस्ते काशीनिवासाय नमो नमस्ते ॥ ११९ ॥
अजातसौन्दर्यसुधानिधानसमृद्धिरूपाय शिवाधवाय ।
धाराधराकार नमो नमस्ते धारास्वरूपाय नमो नमस्ते ॥ १२० ॥
नीहारताराकरकाकवाकप्रकारहाराप्रतिहारवीर ।
वीरेश्वरापारदयानिधान पाहि प्रभो पाहि नमो नमस्ते ॥ १२१ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे गणेशकृतरुद्रोक्तस्तुतिर्नाम दशमोऽध्यायः ॥ १० ॥

---

## विघ्नेशशंकरसंवादोनाम एकादशोऽध्यायः.

व्यासः—

स्तुत्वा महादेवं प्रणिपत्य पुनः पुनः। कृताञ्जलि पुटस्तस्थौ पार्श्वे डुण्डिविनायकः॥
ालोक्य सुतं प्राज्ञं वेदवेदान्तपारगम् । स्नेहाश्रुधारासंवीतं प्राह डुण्डिं महेश्वरः॥२॥

श्रीसदाशिवः—

शलं खलु ते डुण्डे कुमारः कुत्र वर्तते। दृष्टोऽसि बहुकालेन तस्यापि कुशलं खलु ॥३॥
या सह कुमारेण मया गिरिजया सह। एकत्र वासस्सततं कर्तव्यस्स्यात्ततः परम्॥४॥
कुमारवियोगश्च वियोगस्तव वा मम। तथा गौरी वियोगो वा सर्वथा नैव रोचते ॥५॥
रीं विहाय भक्ताभवतापापहारिणीम्। न स्थातव्यं कुमारेण मयापीति विचारय ॥
धुना निर्गता गौरी सुन्दराद्रिरिमन्दिरात्। मन्दं मन्दं समायाति सा मन्दगमनाखलु
लासमन्दिरं दूरे वरं सुन्दरसुन्दरम्। तत्र तिष्ठति यद्वा सा मध्ये तिष्ठति शाम्भवी ॥८॥
स्तदागमने विघ्नः परिहारार्ह एव सः। जननी दर्शनोत्कण्ठा तव किं वा न जायते ॥९॥

व्यासः—

युक्तं तद्वचश्श्रुत्वा प्रणिपत्य पुनः पुनः। जगाद वचनं चारु स वेदार्थविजृम्भितम् ॥

श्रीगणेशः—

ामिन्नायाति सा गौरी दूरमेतद्धि मन्दिरम्। दूरागमनवेलायां किं विलम्बो न जायते

किञ्च सापथिविश्रम्यमन्दमायातिशाम्भवी। मन्दं मन्दंमन्दवातोवातिवीतापिके
नकदाप्यनुभुक्तोऽस्तिमार्गायासस्तयाशिव। गौरीशरीरंलोकेस्मिन्कोमलादति
किञ्च नाट्यसमारम्भसाधनानि त्वया खलु। प्रेषितानि विचित्राणिप्रायस्तल्लाल
गाननाट्यसमारम्भेप्यपूर्वः कल्पितस्त्वया। तदालोकनसन्तुष्टा कथमायातु सत्व
तदालोकनविघ्नोऽपि मयाकार्योधुनाप्रभो। स विघ्नस्तावदेतस्य भवत्येवापकारकः
अम्बा पश्यति नाट्यं चेत्तत्तन्नाट्यावलोकने। मयानुकूलाचरणं कर्तव्यमितिमन्म
अम्बामहोत्सवे विघ्नं किं कर्तुं यतते मनः। कृतेऽपि यत्ने तद्विघ्ने यत्नविघ्नो भविष्य
अन्येष्टविघ्नाचरणे सामर्थ्यं मम यद्यपि। तद्विघ्नाचरणे यत्नः कृतोऽपि विफलो भवे
बलाबलविचारेण यः कार्यकरणोद्यतः। तेन कार्यं भवत्येव नान्येनेत्यवधारितम्।
तवापि यदि सञ्जाता तदभ्यागमनत्वरा। तदा कथमिदंसर्वमपूर्वं प्रेषितं त्वया॥
ब्रह्माण्डमध्ये यत्तुल्यं वस्तु क्वापि न दृश्यते। तादृशं सृष्टमग्रेश त्वया विश्वात्मना
अदृष्टपूर्वं दृष्ट्वापि कस्य वा विरतं मनः। दृष्टपूर्वाभिमर्षेऽपि न रम्ये विरतं मनः॥
तद्विघ्नाचरणेगौरी कुपिता यदि पश्यति। तदा ममात्रागमनं पुनश्शङ्कितमेव न।
ब्रह्माण्डमण्डले को वा तद्विघ्नाय प्रवर्तते। जीवनाशापरित्यागे कदाचिद्यतते तथा

भवत्पदाम्भोजविलोकनाय पुनःपुनश्चित्तमिदं प्रवृत्तम्।
नान्यत्र गन्तुं यतते महेश त्वमेव माता च पिता त्वमेव ॥ २५ ॥

त्वत्पादपद्मभ्रमरत्वमेतन्मनोभिवाञ्छत्यतिलालसञ्च।
किमुत्तमं वस्तु विहाय याति पवित्रवृत्तिस्सुखवृत्तिकामः ॥ २६ ॥

यन्नश्रुतं वेदवचःप्रपञ्चविचारविस्तारपरैरपारैः।
तदग्रदृष्ट्वापि विहाय याति चित्तं तपोलब्धमिदं कथं वा ॥ २७ ॥

अतः परं ते मयि सत्कृपाचेन्नयामि कामं खलु कालकालः।
त्वत्पादुकाराधनसेवनाभ्यामन्यत्र तावन्नरुचिर्ममाद्य ॥ २८ ॥

अम्बा समायास्यति चेदिदानीं त्वत्पादपद्मार्चनविघ्न एव।
नूनं तदभ्यागमनं तदानीमविघ्नितंत्वत्पदपूजनं न ॥ २९ ॥

योषाजारमिवप्रियं प्रियतमं त्वत्पादपद्मं मया-
प्यालिङ्ग्याद्य मम प्रयाति न कथं स्वाभीष्टसिद्धिं विना ।
त्यक्तुं वाञ्छति जारमप्यतिधनं तद्वन्मनो मे प्रभो
मच्चित्तभ्रमरो जहाति न भवत्पादाम्बुजं शङ्कर ॥ ३० ॥

अनन्तजनिसञ्चितैरमितपुण्यपूर्णार्णवै-
रिदं शिवपदाम्बुजं नयनगोचरं जायते ।
जगज्जनकशङ्करत्रिदशनायकाव प्रभो
भवत्पदसरोरुहभ्रमर एव चित्तं मम ॥ ३१ ॥

भवन्तु बहवस्सुरास्त्रिपुरसूदनाराधकाः
परं तु न सुरैरिदं तव पदाम्बुजं दृश्यते ।
अपारगुणसागरप्रमथवीरगौरीपते
चिरं मम मनः पदे तव विहारमन्विच्छति ॥ ३२ ॥

अलं विमलयोगिहृत्कमलमध्यवासैरलं
शिवाङ्घ्रिकमलाधुना शरणदाग्रगण्यादरात् ।
वसस्व मम मानसे कुगतिभूरिभारालसे
विचारगिरिगह्वरप्रकरभूतभूसाध्वसे ॥ ३३ ॥

अनाथशरणागतासुरसुरैकरक्षामणे
त्रियम्बक सदाशिव त्रिपुरमर्दनाशाम्बर ।
कृपासुरससागर स्मरहरान्धकारे हर
प्रसीद भगवन्प्रभो भव भवाब्धिसंशोषक ॥ ३४ ॥

यदि त्रिणयनाधुना तव पदाम्बुजं त्यज्यते
मदीयमपि मानसभ्रमरमद्य सम्मूर्छितम् ।
क्षणेन हतमेव वा विगतजीवनं मन्महे
न जीवनविवर्जितं क्वचन जीवजातं प्रभो ॥ ३५ ॥

शिवैकशरणस्य मे शरणमन्यदस्तीति किं
भ्रमोऽपि भवति प्रभो शिवपदाम्बुजाराधनम् ।
विधानमिति मे मतिस्तदितरन्निधानं न मे
तदेव निधनेऽपि मे धनमनन्यलभ्यं धनम् ॥ ३६ ॥

महेश्वर कदापि वा न च जिहास्यमास्यान्तर-
स्थितान्नमतिनिर्मलं शिवनिवेदितं सादरम् ।
अमूल्यसितशर्करामधुरमेवमीशाधुना
भवत्पदसरोरुहं न मम मानसं त्यक्ष्यति ॥ ३७ ॥

क्षणार्धमपि वा मनस्स्मरहराङ्घ्रिपङ्केरुह-
प्रभूतमकरन्दजप्रमुदधारया धीरया ।
सुधामपि विहाय तां विहर सादरं क्वादर-
स्तवापि मम वा मनश्शरणमिन्दुमौलिं व्रज ॥ ३८ ॥

व्रज व्रज निरन्तरं व्रज महेशपादाम्बुजं
भजाभयदमन्वहं भजभजाधुना वा भज ।
कथं न भजने रतिश्शिवपदाम्बुजस्यान्यथा
ज्वलज्ज्वलनतेजसा ज्वलतु ते स्वरूपं मुहुः ॥ ३९ ॥

निधानमिदमेव मे सुकृतसिन्धुसङ्गार्जितं
ममाद्य निधयो नव त्रिपुरवैरिपादाम्बुजम् ।
इदं खलु सुदुर्लभं न निधयस्तथा दुर्लभाः
किमन्यदपि वाञ्छितं मम शिवाङ्घ्रिपद्मं विना ॥ ४० ॥

प्रयाति मरणे धनं न निधयः प्रयान्त्येव किं
प्रयान्ति पशवः प्रियाः प्रियतमाः प्रयान्त्येव ताः ।
तदन्यदपि याति तद्धितसुपुत्रमित्रादिकं
न याति सुकृतं परं पशुपतिप्रसादार्जितम् ॥ ४१ ॥

न सातिशयमीदृशं पशुपतिप्रसादं विदु-
स्स्मरारिचरणार्चनादधिकमस्ति किं वा फलम् ।
श्रुतिश्रुतमनेकधा शिवपदाम्बुजाराधनं
प्रधानधनमित्यपि प्रथितमेव वेदेष्वपि ॥ ४२ ॥
निरन्तरमुमापतिस्स्मरणकारणं दुर्लभं
तपःफलमिदं मतं शिवपदाम्बुजानुग्रहात् ।
किमन्यदधिकं फलं शिवशिवेति वाचादरा-
त्किमस्ति भुवनत्रयेऽप्यधिकमेतदन्यत्तव ॥ ४३ ॥
यदङ्घ्रिकमलार्चनं जगति दुर्लभं देहिनां
सुरासुरमुनीश्वरप्रवरवाञ्छितं तत्परम् ।
तदेव पुनरीप्सितं मम पुनस्तदेवेप्सितं
तदेव पुनरीप्सितं मम पुनस्तदेवेप्सितम् ॥ ४४ ॥
इदं शिवपदाम्बुजं यदि विहाय मोहान्मुहुः
प्रयातिमदनान्तकस्मरणहीनमेतन्मनः ।
प्रणश्यतु न तेन मे गिरिश कृत्यमस्ति प्रभो
नचाहितमभीप्सितं भवति याति सङ्गाह्यताम् ॥ ४५ ॥
परात्परतरामरप्रवरशङ्करा धीरतां
हरादरवशान्मम त्वमसि मे गतिस्सर्वथा ।
अनन्यशरणं कथं हर विहातुमिच्छा तव
प्रचोदय धियः प्रियास्सदय भर्ग नस्ते पदे ॥ ४६ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे विघ्नेशशंकरसंवादो नाम एकादशोऽध्यायः ॥ ११ ॥

---

१. शिवशपामिपादाम्बुजेकिमस्तीति पाठः ।

देवविष्णुसंवादो नाम द्वादशोऽध्यायः

व्यासः—

इत्याकर्ण्य वचस्तस्य करुणारसवारिधिः । आलिङ्ग्य ढुण्डिराजानमाह विघ्नह

हरः—

स्तवेनानेन सुप्रीतस्तव देयं किमस्ति मे । त्वं कुमारश्च गौरी च [1]प्रियेष्वन्यन्नमे प्रि
अयं स्तवश्श्रुतिमतश्श्रुत्यर्थः प्रकटीकृतः । स्तवेनानेन सुप्रीतो वत्स जीव चिरं
स्तुत्वास्तोत्रेणमांनत्वाप्राप्नुयादीप्सितंफलम् । स्तवराजत्वमापन्नस्स्तवस्सोऽयं
अतः परं त्वया तावद्गिरिजा सन्निधिं प्रति । गन्तव्यं त्वरया तत्र तदीयं पश्य स
नाट्याङ्गनालोकनेन सन्तुष्टा गिरिकन्यका । यद्वा मार्गपरिश्रान्ता तद्विचारस्त्व
जननीजनकश्चेति पुत्र पोष्यद्वयं परम् । तत्रापि जननी श्रेष्ठा गर्भधारणपोषणैः ।
विरक्तेनापि जननी पोषणीया प्रयत्नतः । असाध्वी वास्तु साध्वीवा साध्वी तु सुता
असाध्वी यदि भर्तारं विहायान्यत्र तिष्ठति । तदुपेक्षा न कर्तव्या पोष्या सान्नादि
यदि साध्वी पितुर्गेहे बन्धुगेहेऽपि वा वसेत् । तामाहूय स्वसदनं पुत्रास्सम्पोषये
त्वयापि तत्र गत्वापि तदुद्वेगकरं परम् । कृत्यं न कार्यं सहसा कार्यं तदनुमोदन
यदिश्रान्तागिरिसुतामार्गायासेन सा तदा । सुधादानादिना सम्यक्सेवनीयात्वया
इतो नय सुधां दिव्यां निर्मितामधुना मया । पीत्वावशिष्टां सा पीता निर्मितापि सुधा
सुधाविशेषास्सन्त्येव बहवस्तेषु सादरा । न भवानी भवत्यत्र सादरा सा भवि
मद्भुक्तशेषं दृष्ट्वापि प्रहृष्टा गिरिकन्यका । स्थापितो मह्यमीशेन शेषोऽयमिति सा
पतिव्रता गिरिसुता सा ततः पतिदेवता । तस्याः प्रीतिर्मयि प्रीतिर्मम तस्यां विशे
साध्वी सुपुत्रा सुभगा लावण्यनिधिरम्बिका । ततस्तस्यां मयि प्रीतिर्धारारूपेण व
सालावण्यसुधाम्भोधिसौभाग्याम्बुधिरेव सा । सौभाग्यानांनिधानंसासागौरीसर्वम
न सर्वमङ्गलां त्यक्त्वा वसामि हृदयादहम् । हृदयान्निर्गता सा चेन्मङ्गलं दुर्लभं
सर्वमङ्गलदानार्थमुद्यता सर्वमङ्गला । तद्वियोगे मङ्गलानि दुर्लभानि मनीषिणाम्
तां सर्वमङ्गलां स्मृत्वा दुष्कराण्यपिवस्तुतः । कार्याणि कृत्वा क्षुद्रोऽपि तत्कार्यफल
त्वयापि गमने गौरीचरणाम्बुरुहं मुहुः । स्मर्तव्यमिति यत्नेन सर्वसिद्धिकरं परम्

१. प्रियस्त्वन्यन्नमेप्रियमिति पाठः ।

ा तारकसंहारं कुमारः कर्तुमुद्यतः। तमवध्यं विदित्वाथ चिन्तयामास चेतसा ॥
रेतश्शङ्करेणाद्य तारकासुरनाशने। तन्नाशविघ्नसङ्घानां नाशः केन भविष्यति॥२४
ाश्चतुर्मुखात्प्राप्ताः कोटिशस्तेन तारकः। अवध्यत्वेन निर्णीतो वधस्तस्य कथं भवेत्
मत्तस्तैर्वरैस्सोऽपि गणयत्येव नामरान्। तेनामराधिकाराश्च क्षणेनैव हृताः पुरा ॥
चेरुस्ते धरापृष्ठे निष्ठुरे शर्करावृते। नारायणादयस्सर्वे तदा निरवलम्बनाः॥२७॥
ष्ठत्येवमतिकूरस्तारको भुवनत्रयम्। करोति सव्यथं तस्य संहारः केन वा भवेत् ॥
न्द्रश्शचीकुटीरेऽस्मिञ्जयन्तेनापि संवृतः। स्वर्गलोकात्परिभ्रष्टः कष्टमाप्नोति नष्टधीः
णकल्पमभूद्वज्रं वज्रं दण्डायते खलु। या वृत्रहरणे शक्तिस्तस्य या सापि निर्गता ॥
ोऽयं नारायणः पूर्वं पद्मया सह सादरम्। वैकुण्ठे संस्थितस्तस्य शक्तिरप्यतिकुण्ठिता
ताविले कमले सोऽपि तया कमलया सह। निलीनोन्मीनसङ्घातनिहतो दुःखितोऽधुना
दो वाणीरमणस्सोऽपि ब्रह्मारण्यमुपाश्रितः। जीर्णपर्णकुटीवाटीनिकटे रटति स्फुटम्
सूरकरसञ्चारस्सूरो दूरास्तमाश्रितः। न चन्द्रवार्ता ताराणां दूरे वार्ता विशेषतः ॥
ातो वाति शनैरेव तारकासुरमन्दिरे। दूरीकुर्वन्रजःपुञ्जं शङ्कितोऽतीव दुःखितः ॥
ाककर्मरतो नित्यं पावकस्तन्महानसे। अनपायेन दुःखेन कालं नयति दुष्करम्॥३६
मोपीन्धनयोगेन दुस्सहश्चेन्महानसे। तदा दुःखमिति ज्ञात्वा न चेन्धनमपेक्षते॥३७
रुणस्तरुणीं त्यक्त्वा सदा स्वरमणीगृहे। तस्यैव सेचनं कुर्वन्नधितिष्ठति दुःखितः॥
ागरोऽपि स्वरत्नानि तस्मै दत्वा मुहुर्मुहुः। रिक्त एव पुनर्भीतो रत्नाभावविनिश्चयात्
ाने यानि रत्नानि बहूनीति स तारकः। दूतान्प्रेरयति व्यग्रस्तदा किं कार्यमित्यपि॥
ीयन्ते प्रत्यहं रत्नान्यनन्तानि पुनःपुनः। किमुत्पन्नानि रत्नानि किं देयानीति दुःखितः
द्वदन्येऽपि सर्वेऽपि सुरास्तारकपीडिताः। गिरिकन्धरमाश्रित्य निलीनास्सन्ति दुःखिताः
नयोऽपि वनं त्यक्त्वा फलमूलजलावृतम्। साग्निहोत्राश्चरन्त्येव नीरसे गिरिकन्धरे॥
ऊषरापि धरा धीरा तारकासुरविह्वला। सदा सफलसस्याढ्या पीड्यमानापि दानवैः
ारकासुरगम्भीरशरीरामिततेजसा। अहोरात्रविवेकोऽपि नान्धकारो न सर्वथा ॥
न तत्प्रतिभटो लोके लोकालोकाचलावधि। क्रीडां कृत्वा स वैकुण्ठे स्वदारैस्सह तिष्ठति
तदग्रे विरजानामनदीं दृष्ट्वा स तारकः। भीतस्तदग्रे नायाति शूलज्वालासमावृताम्

अतो नायाति कैलासं कालकालभयादपि। अन्यथातस्यगमनंतत्रापि स्यादकुण्ठि
एवं संवसतस्तस्य तारकस्य दुरात्मनः । अशक्य एव संहारस्सर्वथाऽपीति म
दुःखितास्ते सुरास्सर्वे विचार्यान्योऽन्यमेकदा। नारायणस्यनिलयं जग्मुस्तेकम
खद्योतवद्विलीनं तं कमलासहितं हरिम्। ऊचुर्विस्मयमापन्नाश्शरणं किमिहेति

देवाः—

नारायणाधुना कं वा शरण्यं शरणार्थिनाम्। प्रपन्नास्स्मः प्रपन्नानामापन्नार्तिविना
क्व ते धैर्यं क्व ते शौर्यं क्व ते बाहुपराक्रमः। खद्योतरूपतामेत्य पद्मया सह तिष्ठ
मधुकैटभवैरित्वं कुत्र वा गतमद्य ते। लज्जावहं न तन्नाम किमिदं मधुसूदनम् ॥
अतः परं कथं सौख्यं ईदृशी ते गतिर्यदि। कमला पतिता वाते कथं वा स्थिरता
निलीनं त्वां न जानाति नूनं कमलया सह। विमला कमला तेन दृष्टा चेत्त्यज्यते
अत्याविलेऽस्मिन्कमले लीनेसति नदृश्यसे[1]। अन्यथा तेननीता स्याद्धलिनाकमल
तव चेत्कुण्ठिता शक्तिरस्माकमपि कुण्ठिता। शक्तिरत्र त्वया तावद्धैर्यं क्रियते
धैर्यमावह यत्नेन नारायणसुरैस्सह। युद्धे कृते तारकोऽपि हन्तव्य इति सत्वरम्
मरणादधिकः किं नः कमले कमलान्वयः। आविले विमलस्यापि गतिस्तव किम

हरः—

इत्युक्तं तद्वचश्श्रुत्वा मन्दमाह हरिस्सुरान्। तारकश्श्रोष्यतीत्येव भीतस्स्ववचनं

नारायणः—

तारकासुरहन्तृत्वशङ्काप्यस्मासु नामराः। बहुवारं कथं तेन क्रूरेणैव निराकृताः।
तारकासुरहुङ्कारोऽप्यस्माकमशनिः खलु। न कोप्यशनिपातेन जीवनाशं करिष्य
तन्नेत्रतेजसा दग्धमस्त्रमण्डलमस्य मे। नारायणास्त्रं भस्मेदं चक्रं भस्मावशेपित
इदमस्त्रद्वयं मुख्यं भस्मसादभवत्सुराः। युद्धसाधनमस्माकमन्यन्नष्टमसंशयम् ॥
शार्ङ्गं नष्टं गदा नष्टा शङ्खो नष्टस्तदीक्षणात्। नष्टं बाहुबलं सर्वं शरीरबलमन्ततः
अतस्तेन सहास्माकं युद्धवार्तापि दूरतः। तत्तेजसातिदूरेऽपि स्थातुमेव न शक्य
तन्नेत्रतेजःपातेन देहो मेचकसन्निभः। तेन कृष्ण इति ख्यातिर्लोके जाता म
युद्धप्रत्याशया यूयमधुना समुपागताः। सा तावदतिदूरेऽस्तु वासोऽपि कठिनोऽ

१. लीनोऽसीति न दृश्यसे इति पाठः।

नां वचनैरत्र यदि कोलाहलस्तदा । स समागत्य सहसा हत्वा यास्यति तारकः ॥
क्तं मधुवैरित्वं मयि तन्न ममामराः । स महामायया तावत्कैटभोऽपि हतः पुरा ॥
गौरी लोकजननी महामायेति विश्रुता । सा संहाररता शक्ता मोहयत्यखिलं जगत्
मायामोहितोऽहं भवन्तोऽप्यमरास्तथा। मोहिता मुनयोऽप्यन्ये मोहमेष्यन्ति सर्वदा
चेन्मोहप्रवृत्ता स्याज्जगतो मोहितं जगत् । विनाशाय प्रवृत्ता चेद्विनश्यति न संशयः
कैटभनाशाय विधिना संस्तुता शिवा। तदा तयोर्विनाशोऽपि कृत एव तया खलु ॥
च्छक्तिः परमा माया सर्जने पालनेऽपि सा। संहारेऽपि समर्था सा महेशस्यापरा तनुः
ा यस्य विनाशाय कृतो यत्नः कियानपि। तस्य नाशो भवत्येव तस्मिन्नेव क्षणे सुराः
ाणामसुराणाञ्च सृष्टिपालननाशनैः । सा क्रीडति महागौरी शिवानी सर्वमङ्गला॥
र्वाणी पार्वती दुर्गा मृडानी विश्ववाहुका। कामाक्षी सा विशालाक्षी शिवात्रिपुरभैरवी
द्धेश्वरी च विकटा सैव कात्यायनी स्मृता । वागीश्वरी महाकाली महिषासुरमर्दिनी
डमुण्डप्रमथिनी धूम्रलोचनमर्दिनी । निशुम्भमर्दिनी देवी शुम्भासुरनिवारिणी ॥
 शाकम्बरी लोके कौशिकीति च गीयते । दुर्गासुरविनाशेन दुर्गा देवीति गीयते॥
री संहारकालेऽपि करुणारससागरा । रिपूनपि पुनात्येव शस्त्रप्रहरणादिभिः ॥
ामाया समुत्पन्ना माया काचन शोभना। संहारकारिणी सापि मायान्तरविजृम्भिता
तन्मायास्वरूपाणि निर्माय स्वयमेव सा । उत्पत्तिस्थितिसंहारान्करोति भववल्लभा
ासुरादयस्सर्वे महामायाहतास्सुराः । कैलासनगरद्वारस्वर्गलोकमुपागताः ॥ ८६ ॥
ऽपि धन्यास्सुरास्सत्यं यया ते चासुरा हताः। न तादृशं वा भाग्यं नःपुण्यैरगणितैर्विना
स्माकमपि नष्टानि दुरदृष्टानि सा शिवा । दुरदृष्टविनाशाय प्रसङ्गेनापि संस्मृता ॥
तःपरं तारकाद्या भीतिर्जाता दुरत्यया । सा नाशं प्राप्नुयादेव गौरीस्मरणकारणात्
 सर्वमङ्गला नाम्ना तन्नामस्मरणे सति । शाम्भवानां निर्मलानां मङ्गलानि पदेपदे॥
नं जागरणं तेषां मङ्गलानि प्रयच्छति । स्वप्नेऽपि सा मङ्गलानि मङ्गला सर्वमङ्गला॥
द्रामाङ्गमिति ख्याता वेदे सा सर्वमङ्गला । मङ्गलानि तनोत्येव प्रतिक्षणमनाकुला ॥
ो वा न मङ्गलं प्राप मङ्गलापतिपूजया । स सर्वमङ्गलाभर्ता मङ्गलानि प्रयच्छति ॥
र्वमङ्गलया युक्तस्तारकासुरनाशकम् । जनयामास विश्वात्मा तारकं स हनिष्यति ॥

अतःपरं कियान्कालो नेयोऽस्माभिस्ततः परम्। तारकासुरसंहारं स कुमारः क
स महेश्वरवीर्येण कुमारस्समभूत्सुराः। स वीराग्रेसरः क्रूरो महागौरीकुमारकः
स शौर्यनवनीतेन पोषितश्शौर्यसागरः। तारकासुरसंहारं क्षणेनैव करिष्यति॥
कुमारशरसन्धानदहनज्वालया परम्। तारकासुरसंहारो भविष्यति न संशयः

हरः—

इति तद्वचनं श्रुत्वा नत्वा नारायणं सुराः। प्रहर्षेण परं प्राहुः कृतार्थोऽसीति

देवाः—

तारकासुरसन्त्रासदावानलसमावृताः। शिवनामसुधासारैश्शीतलास्स्मः किल
कथं स्मृतो महादेवस्संसाराग्निविनाशकः। अकस्मादधुना दीनानस्मान्पालयि
स कृपालुर्नीलकण्ठस्सर्वकण्टकनाशकः। करोति मङ्गलं नित्यं क्षणार्धेनापि वा
प्रतिक्षणं महादेवचरणस्मरणादराः। दाराः परमुदारास्ते न संसारभयातुराः।
त एव धन्या मान्याश्च धरणीमण्डले मुहुः। ये स्मरन्ति महादेवमुमालिङ्गितवि
अहो महदिदं भाग्यं सौभाग्यनिधिरेव नः। गौरीधवोऽधुना साधु धारारूपेण
महादेवपदाम्भोजभृङ्गमङ्गं समङ्गलम्। तनूत्तमाङ्गमुत्तुङ्गं मुहुस्तत्प्रणतं मुदा॥
हरं परात्परतरं तं महानन्दसागरम्। स्मृत्वा नत्वापि दृष्ट्वा वा परमानन्दतां य
ये ये कृतार्थास्ते सर्वे सर्वदा सर्वसिद्धिदम्। शङ्करं शरणं प्राप्ताः प्राप्तैश्वर्यमहोत्स

यद्द्वारगास्तुङ्गतुरङ्गकोट्यो यद्द्वारिमत्तेभसमूहकोटयः।
तद्द्वारपालाय नमो नमस्सदा स शाङ्करद्वारविचारसागरः॥ १०९॥
न शाम्भवानामशुभं कदाचित्ते शोभनानां सदनं सुखानाम्।
त एव धन्याः पृथिवीतलेऽस्मिन्मान्यास्सुराणाञ्च नरेश्वराणाम्॥ १

अस्माकं कृतपुण्यसङ्घविभवैरद्याधुना शङ्करे
भक्तिः काचन सापि मेरुसदृशं सूते धनं निर्धनाः।
स्मृत्वा तं सकृदप्यपारधनभूसौभाग्यवन्तस्तत-
स्सन्तः केऽपि किलान्तकान्तकलसत्पादाम्बुजाराधकाः॥ ११
सम्पूर्णकामं परमं प्रकामं निर्दग्धकामं गिरिजार्धवामम्।
धृतार्धसोमं समपामसोमं देवोत्तमं दैवतसार्वभौमम्॥ ११२॥

कृतं किमपि यत्पुरा शिवपदाम्बुजाराधनं
तदेतदधुना सुखं किमपि साधु सूते मुहुः ।
इदं न सुरधेनुभिर्न मणिनापि कल्पद्रुमै-
स्सुधानिधिनिमज्जनैरपि तु केवलं तेन नः ॥ ११३ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे देवविष्णुसंवादो नाम द्वादशोऽध्यायः ॥ १२ ॥

---

श्रीमहेशगणेशसंवादो नाम त्रयोदशोऽध्यायः.

श्रीशिवः—

डुण्डे कुमारोऽपि विचार्यादरपूर्वकम् । नत्वा मामाह विनयात्कृताञ्जलिपुटश्शनैः॥

कुमारः—

ापारकरुणासारसागर शं कुरु । मदन्योदयनीयस्ते डुण्डेर्वा नैव दृश्यते ॥ २ ॥
कासुरसंहारविहारचतुरो हरः। स महावीर इत्यस्ति श्रुतिस्मृतिशिरोमणिः ॥ ३ ॥
ष्टिपालनसंहारान्करोति श्रीमहेश्वरः । न तदन्यः क्वचित्कोऽपीत्यपि श्रुतिरपि श्रुता
स्तारकसंहारः कथं कार्यो मया प्रभो । तादृशं नास्य सामर्थ्यमन्यस्यापि न सर्वथा
ार्यकरणे शक्तो यस्तेनैव परं खलु । तत्कार्यमिति नान्येन न तत्वं तादृशं खलु ॥
जसा सुरास्सर्वे पराभूताः प्रतिक्षणम् । तद्वीर्यदावदहनं न सह्यमिति मेनिरे ॥७॥
भानिव तत्तेजस्सुरसंहारमिच्छति । स महाप्रलयाग्नीनां समूह इव तिष्ठति ॥ ८ ॥
दुर्धर्षस्सुराणां चेत्सहायोऽपि सुरैर्मम । कथं विधेयो [1]विधिना स तु नारायणो गतः
ुना तस्य वार्तापि न श्रुता तात का गतिः। तस्य नारायणस्यापि विधेर्वा भक्तवत्सल
मेवमुत्कटा सृष्टिस्तस्य सम्पादिता प्रभो । तत्संहाराय यत्नोऽपि कथमेतादृशोऽधुना॥
कालकूटकूटानां कूटवत्किल वर्धितः। अतस्तस्य न संहारे प्रवृत्तिरपि जायते॥१२॥
वटाङ्कुरवत्तस्य सम्मतं परिपालनम्। संवृद्धः किं नखच्छेद्यश्शाखामण्डलमण्डितः ॥
ं विषतरुस्सृष्टस्सुराणामपि नाशकः । कालकूटादपि भयं न सुराणामभूत्तदा॥१४

---

१. विधिना सह नारायण इति पाठः ।

तन्नेत्रतेजसां लेशाः कालकूटवदन्वहम् । स्वर्गिवर्गविनाशाय चरन्ति सुरमन्दि
तन्नेत्रतेजोऽवयवोऽप्यसंसह्यः कथं मम । सह्यस्स साक्षादग्नीनां समूहः प्रलयोन्
तत्संहारप्रयत्नोऽपि प्रायस्स्याद्विफलो मम । अतस्तदर्थमधुना यत्नो न क्रियते
यत्ने कृते यदि फलं न भविष्यति सत्वरम् । तदा चेतसि वैक्लब्यमकीर्तिरपि
तस्मादगमनेनैव कालो नेयः कियानपि । असह्य एव सर्वेषां स सह्यः किं मया
ततः पराजये लोकेऽप्युपहासोऽपि जायते । किं तेनाप्युपहासेन शूराणामपि
यदि तस्मिन्महायुद्धे सन्नद्धे बुद्धिनाशके । विपर्ययो भवेद्युद्धे यशोवृद्धिस्तदा
उत्पत्तिरेव यशसः प्रथमं दुर्लभा ततः । कथं तद्युद्धवार्तापि कृतान्तान्तक शङ्क
सर्वेषामन्तकत्वेन कृतान्तः प्रथितः कथम् । न प्रेष्यते तद्वधाय तद्वधं न करोति
कथमस्मदवध्यस्य तस्य तद्वध्यतेति चेत् । तर्हि सह्या तवापीश मम त्रिदशदुर्दशा
तदायुः परिमाणं च न कर्तुं यतते मनः । अतस्तद्युद्धवार्ताभिः कालकालालमि

हरः—

इत्युक्तं तद्वचश्श्रुत्वा मयैवं समुदीरितम् । तदादरेण शृणु मे गणेश वचनं पुनः॥
सत्यमुक्तं कुमाराद्य तारकासुरसन्निभः । नाधुना वर्तते वीरो न भूतो न भविष
तथापितेविचारःकःकालींकात्यायनींस्मर । कालिकालीतिकालीतिस्मरन्युद्धेजयं
उमा गौरी महागौरी महाकाली शिवासती । शर्वाणीचण्डिकादुर्गारुद्राणी गिरिज
मृडानी पार्वती माया महामाया महेश्वरी । अपर्णा शाम्भवी भद्रा शुभा त्रिपुरभैरवी
श्रीस्सर्वमङ्गला लक्ष्मीर्भवानी दक्षकन्यका । आर्या हैमवती चेति श्रुत्वा जयमवाप्नु
एकैकमपि यन्नाम गौर्यास्तद्दुःखनाशकम् । जयदं धनदश्चैतदायुर्वृद्धिकरं परम् ॥
ततः कुमारस्तां गौरीं स्मृत्वा युद्धाय याहि ते । जयो भवत्यसन्दिग्धं तन्नामजयदं

स्मृत्वापि गौरीं गिरिराजकन्यां धन्याश्च मान्याश्च कलङ्कशून्याम् ।
दुर्गामनन्यामपि भावयन्तस्सद्यो भवन्त्येव हि भाग्यवन्तः ॥ ३४ ॥
स्मृत्वापि यां पातकसागरेभ्यो निर्गत्य सङ्गत्य च सौख्यसङ्घैः ।
स्वर्गं समेत्याप्यपवर्गमेत्य तिष्ठन्ति भाग्येन नराश्शिवाग्रे ॥ ३५ ॥
यद्दृष्टिपातेन जगत्समस्तमुत्पन्नमेतत्परिपालितञ्च ।
कल्पावसाने प्रलयं प्रयाति सा देवता मङ्गलदेवता या ॥ ३६ ॥

तत्पादपद्मस्मरणं मुनीनां तपस्यया केवलमम्बिका सा ।
स्मृता सदा सर्वसुखप्रदात्री सैषा विधात्री सुखसागराणाम् ॥ ३७ ॥
यामन्नपूर्णां प्रणमन्ति देवास्स्तुवन्ति गन्धर्वगणामुनीन्द्राः ।
मर्त्याश्च तत्पादरजःप्रसादाद्रमादयस्सा खलु पूजनीया ॥ ३८ ॥
यस्याः कटाक्षप्रसरेण धन्यो दीनो दरिद्रः कृपणोऽपि धन्यः ।
मान्यस्सुराणां धनसागराणामर्धीश्वरस्स्यादिति तां भजाम्बाम् ॥ ३९ ॥
यत्पादपद्माम्बुजरेणुलेशं दधार शौरिः धृतकूर्मरूपः ।
शेषस्सहस्रेण दधार मूर्ध्ना सैषा भवानी शुभराजधानी ॥ ४० ॥
कुलाचलैर्मेरुसमानधैर्यैरतिप्रयत्नेन विभुग्नकायैः ।
यत्पादपद्माम्बुजरेणुलेशो धृतो मुदा सा गिरिजा तवाम्बा ॥ ४१ ॥
दिग्दन्तिभिर्यत्पदपद्मरेणुर्धृतस्स्वकुम्भस्थलपङ्किलोऽपि ।
मदाम्बुधारापरिवीतगात्रैस्तद्धारणायासगतैस्स्वतन्त्रैः ॥ ४२ ॥
यत्पादपद्माम्बुरुहार्चनाय रत्नाकरो नूतनरत्नमालाम् ।
सम्पादयत्यन्वहमादरेण सा किं न गौरी तव पूजनीया ॥ ४३ ॥
इयं स्तुतिर्मन्मुखपङ्कजेभ्यो मरन्दधारेव मुदा भवान्याः ।
मुदे प्रवृत्तास्तु शुभाय नित्यं जयाय सौभाग्यसमृद्धिहेतुः ॥ ४४ ॥
अतः परं सत्वरमेव डुण्डे गौरीपदाम्भोरुहवीक्षणाय ।
कुरु प्रयत्नं कुरु मा विलम्बं लम्बोदरालम्बनसम्भ्रमाणाम् ॥ ४५ ॥
एकाकिनश्चेत्तव तत्र गन्तुं मनःप्रवृत्तिर्न तदा तवापि ।
कुमारमभ्येत्य सहायभूतं स तावदम्बानवलोकनार्तः ॥ ४६ ॥
तेनापि शीघ्रं तव कार्यमद्य कर्तव्यमेवेति विनिश्चयो मे ।
तस्यास्त्यशक्यं न किमप्यतस्ते विचारणीयं गमने गणेश ॥ ४७ ॥
एकेन तेनैव मदिष्टकार्यं सिद्ध्यत्यवश्यं स तथा विलम्बम् ।
न कर्तुमिच्छत्यतिसूक्ष्मबुद्धिस्सुहृद्व्रतं वेद स किं न वेद ॥ ४८ ॥
स मन्नियोगोद्यतचित्तवृत्तिर्निवृत्तिरप्यस्त्वपराधभीतेः ।

तच्चित्तवृत्तेरनुवृत्तिरस्मिन्त्स शौर्यमूर्तिश्श्रुतिगीतकीर्तिः ॥ ४९ ॥
तस्याधुनैवागमने विलम्बस्त्वया न कार्यस्सहसा विलम्बः ।
न तस्य सह्यस्स हि सिह्मसिह्मसिह्मासनं द्रष्टुमपि प्रवृत्तः ॥ ५० ॥
यद्वीर्यवार्ताश्रवणेऽपि तारस्स तारकस्सर्वसुरान्तकोऽपि ।
त्रस्तस्समस्तासुरभूनिरस्तस्स वस्तुतस्तावदतिप्रशस्तः ॥ ५१ ॥
एकः कुमारो जगतीतले मे कुमारनाम्ना प्रथितः कुमारः ।
कुमार एवेति कुमारबुद्धिः कुमारमात्रे मम डिम्भ डुण्डे ॥ ५२ ॥
तेनाकुमारं न कुमारतापि प्रदर्शिता कार्यविशेषसिद्ध्या ।
स सिद्धसाद्ध्यार्थितसिद्धबुद्धिर्न बुद्धिमानत्र तथा विधोऽन्यः ॥ ५३ ॥
गौरी कुमारेण कुमारसूस्स्यात्सूते कुमारं न तथा तदन्या ।
न तादृशः कोऽपि कुमारवर्गे कुमार्गवृत्तिर्न तथा कुमारः ॥ ५४ ॥
मदुक्तकार्ये न विलम्बशङ्का लम्बोदराम्बाचरणाम्बुजस्य ।
आलोकने तस्य खलु त्वरा स्यात्सा तं विलोक्य प्रमुदा भवित्री ॥ ५५ ॥
दृष्टे कुमारे गिरिराजकन्या विन्यस्य कार्यान्तरमाशु तेन ।
आलिङ्गिता क्षीरसहस्रधाराधाराधरात्युच्चकुचा भवित्री ॥ ५६ ॥
दृष्टे कुमारे गिरिराजकन्यास्नेहः परं क्षीररसत्वमेत्य ।
गौरीकुचद्वारवरेण तावद्विनिर्गतस्स्याद्बहिरद्य नूनम् ॥ ५७ ॥
कुमारमार्गागमने प्रवृत्तिं श्रुत्वापि गौरी विगतान्यवार्ता ।
कुचौ पयःप्रस्रवणप्रवृत्तौ दृष्ट्वा मुहुस्स्मेरमुखा भवित्री ॥ ५८ ॥
सुस्मेरद्विगुणीकृतातिरुचिरक्षीरप्रसारं मुहुः
पश्यन्ती कुचकाञ्चनाचलशिरस्सम्माननाभ्युन्नता ।
स्कन्दालिङ्गनलालसापि चषकैः क्षीरं गृहीत्वा मुहुः
किं नायास्यति सत्वरं सुत इति प्रेमाम्बुराशिश्शिवा ॥ ५९ ॥
सा गौरी सुखराशिरेव सुकृतश्रेणीसुधासागर-
स्सौन्दर्यद्रववाहिनी च सततं सा वाहिनी सम्पदाम् ।

१. कुमारवृत्तिः इति पाठः ।

आपद्राशिविनाशिनी खलु महापापाशनिस्सा शनै-
रेतन्मे शयनं समेत्य शमुमा मह्यं प्रदास्यत्यपि ॥ ६० ॥
गौरी शारदपूर्णचन्द्रवदना दृष्टाप्यदृष्टैर्मुहुः
कष्टं दुःखमपाकरिष्यति मुहुस्स्पृष्ट्वा सुखाम्भोनिधिम् ।
सृष्ट्वा सृष्टिविचक्षणा खलु मुहुर्दृष्टिं प्रदृष्टिं परं
स्रष्टुं दृष्टिविशेषपोषिततनुं कुर्याददृष्टान्वितम् ॥ ६१ ॥
भाग्यैर्भूरितपःप्रभावभवनैस्सम्भावनीया मुहु-
र्भक्ताभीष्टफलप्रदाननिपुणा सातिप्रवीणा क्षणम् ।
ध्यातापि क्षणदाप्रतिक्षणमतिश्लक्ष्णं भवानी कदा
द्रष्टव्या नयनश्रमापहरणं कर्तव्यमत्यादरैः ॥ ६२ ॥
धन्यानां भवनेषु सा गिरिसुता विन्यस्य पादाम्बुजं
स्थित्वा वा क्षणमात्रमादरयुता तद्द्वारपालाङ्गणे ।
इच्छन्ती कमलाविलासमसकृत्तद्द्वारपालाङ्गणे-
ऽप्यालस्येन विना रमा विहरणं सा कर्तुमन्विच्छति ॥ ६३ ॥
देवानामपि वन्द्य एव सततं यत्पादुकाराधक-
स्तत्पादाम्बुरुहं स्मरन्ति सुकृतैः कान्तैरनन्तैरपि ।
तन्मात्रस्मरणेन सुन्दरतरे सापीन्दिरा मन्दिरे
तत्सेवानिरता कदापि विरता श्रान्ता न सञ्जायते ॥ ६४ ॥
जातश्चेज्जननीमनोज्ञजठरे गौरीपदाम्भोरुहं
स्मृत्वा भूपलितामुपेत्य बहुधा भुक्त्वापि भोगान्बहून् ।
कुर्वञ्छाम्भवपालनं बहुधनैः कुर्वञ्छिवाराधनं
काशीं प्राप्य विमुच्यते मुनिवराराध्यामसाध्यामपि ॥ ६५ ॥
दृष्टा चेद्गिरिराजराजतनया नेत्रोत्सवो जायते
सर्वाङ्गं पुलकाञ्चितं च न मनः किं तत्प्रसन्नं मम ।

नित्यानन्दसुधाप्रसारलहरीकल्लोलमालाकुलः
कालं किं न नयामि कालकलना सा कालकालस्य मे ॥ ६६ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे श्रीमहेशगणेशसंवादो नाम
त्रयोदशोऽध्यायः ॥ १३ ॥

---

डुण्डिकुमारगौरीसमागमो नाम चतुर्दशोऽध्यायः.

व्यासः—

पुनस्तं गन्तुमुद्युक्तं कर्तुमेव महेश्वरः । प्राह मन्दं मधुरया गिरा गीर्वाणनायकः

हरः—

कुमारागने वृत्ते लम्बोदर विलम्बधीः । निवृत्तैवास्तु सहसा स विलम्बसहोऽपि
नैतस्य दर्शनोत्कण्ठानीलकण्ठाधिरोहणे।मुहुर्मुहुःप्रवृद्धास्यात्तन्निरोधोऽतिदुस्सहः
भवद्गमनमात्रेण त्वरया गिरिकन्यका । समायास्यति मां द्रष्टुं प्रहृष्टवदना सती॥
दृष्ट्वा गौरीं शरद्राकासुधाकरकराशनाः । मल्लोचनचकोरास्ते पुष्टास्तुष्टाभवन्त्यपि

व्यासः—

एतस्मिन्नन्तरे वीरःकुमारस्समुपागतः ।प्रणतः प्रस्तुतानन्दधारासारसमावृतः॥
ततः परं स तुष्टाव भगवन्तमुमापतिम् । अनन्तैरपि वेदान्तैर्योनज्ञातस्तमव्ययम्

कुमारः—

योऽयं वेदस्सच्चिदानन्दरूपो रूपातीतो वेदवेदान्तवार्ताः ।
यस्मादस्मान्निर्गता एव सत्यं तं त्वां देवं तत्वतः कोऽपि वेद ॥ ८ ॥
यस्मादेतज्जायते विश्वमादौ येनैवेदं रक्षितं रक्षणार्हम् ।
अन्ते तावन्नाशमेति प्रभूतं तं त्वां वन्दे देवतासार्वभौमम् ॥ ९ ॥
यत्पादाब्जं मृग्यमासीन्मुनीनां तत्वज्ञानापारसाराकराणाम् ।
तत्पादाब्जं दुर्लभं दुर्लभं मे देवाशास्यं सर्वदा दुर्लभं च ॥ १० ॥

---

१. तस्य तद्दर्शनोत्कण्ठा इति पाठः ।

यत्पादाब्जं कामकामास्सुराद्यास्सर्वे तावद्द्रष्टुमिच्छन्ति भक्त्या ।
तत्पादाब्जं दुर्लभं देवगीतं तन्मे चित्तं सर्वदा सावधानम् ॥ ११ ॥
यागैर्योगैस्साधनैर्यन्नदृष्टं पादाम्भोजं विश्वनाथस्य तन्मे ।
नित्यं तावद्दुर्लभं दुर्लभानां मध्ये तावद्दुर्लभं त्वत्पदाब्जम् ॥ १२ ॥
त्वत्पादाब्जं द्रष्टुमद्यापि धन्या योगाभ्यासं कर्तुमभ्युद्यतास्ते ।
कृत्वा कृत्वा तं पुनश्श्रान्तचित्तास्तत्पादाब्जं द्रष्टुमर्धेन्दुमौले ॥ १३ ॥
घोराकारासारसंसारसिन्धुर्यत्पादाब्जालोकनेन प्रवृद्धः ।
[1]तं त्वां देवं देवतासार्वभौमं वन्दे वन्दे सुन्दरानन्दकन्दम् ॥ १४ ॥
नित्यानन्दानन्दसन्दोहबीजं यत्पादाब्जं सर्वविज्ञानबीजम् ।
पादाम्भोजं तन्नमामि प्रवीणस्त्वत्पादाब्जं सर्वदा दुर्लभं मे॥ १५ ॥
सुरापारकोटीरकोटिप्रभाभिर्भवत्पादुकाकान्तिकान्ताभिरीश ।
प्रशान्तो विधुर्भानुमानिन्दुमौले कलाषोडशी वा न तस्यास्तु तासाम्॥ १६॥
भवत्पादपद्मप्रभामण्डलेन प्रवृत्तोऽपि मार्ताण्ड इत्येव मन्ये ।
जगन्मण्डलं भासयत्यम्बिकेश प्रकाशस्तवायं प्रकाशाय कस्य ॥ १७ ॥
तवायं प्रभावः प्रभूतः प्रभाति प्रभामण्डलस्यास्य कार्यं न विद्मः ।
स्फुलिङ्गे न नष्टेऽपि गाढान्धकारे क सूर्याद्यपेक्षापि लोकेषु दृष्टा ॥ १८ ॥
तटित्कोटिसङ्घातजातप्रकाशं तिरस्कृत्य तेजस्तवेदं प्रवृत्तम् ।
स्फुरत्पादपद्मस्य तस्य स्फुलिङ्गा रविर्वह्निरिन्दुर्ग्रहास्तारकाश्च ॥ १९ ॥
अचिन्त्यप्रभावो मनो गोचरो वा न वेदान्तवाग्गोचरो वा निवृत्ताः ।
स्वतो वाच एवेति मन्ये सचित्ताः प्रवृत्तिः कथं तत्र मानान्तरस्य ॥२० ॥
अनन्तानि पापानि नाशं प्रयान्ति स्वतस्तत्पदाम्भोरुहानुग्रहेण ।
किमुग्रास्त्यशक्यं तवानुग्रहस्याप्ययं ते ममानुग्रहोऽयंमहेश॥ २१ ॥
महेशाद्य याचे भवत्पादपद्मे दृढां भक्तिमेकां तदन्यं न याचे ।
त्वमेवासि माता पितासि त्वमेव प्रभुर्मे त्वमेवासि बन्धुस्त्वमेव ॥ २२ ॥

१. तं त्वां सोममिति पाठः ।

अनाथैकनाथ प्रभो विश्वनाथ प्रभो मामनाथं सनाथं कुरु त्वम् ।
अनन्यावनं ते कथं वा न धर्मस्त्वमेवासि धर्मस्वरूपस्स्मरारे ॥
स्मरामि स्मरामि स्मरारे भवन्तं विपद्ध्वान्तसंहारहेतुं प्रशान्तम् ।
जगद्धेतुमेकं भवन्तं स्मरामि स्मरारे शरण्यो न कोऽप्यस्ति लोके
क्व वा ते पदाब्जं क्व वा वा मनो मे मनोवृत्तिरस्मिन्कथं त्वत्पदा
स्थिरा जायतामिन्दुमौले दयालो दयापात्रमस्मि त्रिणेत्राहमेकः ।
अहं सर्वदा त्वत्पदाम्भोजभृङ्गो भवाम्येव शम्भो भवत्पादपद्मम् ।
मनस्सद्म तन्मे मनःपद्मयापि प्रभो मोहकालेऽपि न क्रीडतीति ॥
भवत्पादपद्मश्रिया साकमेतन्मनः क्रिडतीति प्रमोदो ममासौ ।
ततस्तावता हानिरीशान का ते तवाहं तवाहं तवाहं तवाहम् ॥
न लोके ममान्यत्किमाशास्यमस्तीत्यवश्यं त्वया शङ्कनीयं महेश ।
इतो नाधिकं क्वापि लोकेऽस्ति शम्भो न चात्यल्पमाशास्यमस्तीति

व्यासः—

इति स्तुत्वा महादेवं कुमारो नतकन्धरः। प्रणम्य शिवपादाब्जं तदालिङ्ग्य
ततः परं तं कुमारं करुणासागरो हरः । आलिङ्ग्य डुण्डिना साकमुवाच

श्रीसदाशिवः—

डुण्डे कुमारेण सहाधुना त्वं विमानमारुह्य मनोज्ञमद्य ।
प्रयाहि गौरीचरणारविन्दमरन्दधारादरदर्शनाय ॥ ३१ ॥
इदं तु तावत्सुदिनं गणेश त्वयाद्य नेत्रश्रमवारणाय ।
आनन्दधारापरिपालनाय गन्तव्यमम्बापदसन्निधानम् ॥ ३२ ॥
त्वया जगन्मङ्गलमङ्गलायाः किं मङ्गलं मङ्गलदेवतायाः ।
सेव्यं स्वरूपं नयनारविन्दसन्दोहसेव्यं खलु सेव्यमद्य ॥ ३३ ॥
धन्यं दिनं तावदिदं गणेश गौरीपदाम्भोरुहदर्शनेन ।
नूनं कुमारस्य तवापि भाग्यं सौभाग्यसम्पत्तिनिदानभूतम् ॥ ३४

१. ततस्तावताहं निरीशा न कान्ते इति पाठः ।

अभूतपूर्वं खलु मङ्गलं ते भविष्यति प्रायश इत्यवैमि ।
यतः कुमारोऽपि समागतोऽत्रमम्बापदाम्भोजविलोकनाय ॥ ३५ ॥
रमादिकापारसुराङ्गनानां तुङ्गोत्तमाङ्गानतपादुकायाः ।
मम प्रियायाः परमम्बिकायाः पादारविन्दं मुनिवृन्दवन्द्यम् ॥ ३६ ॥
वन्दारुवृन्दारकवन्दितायाश्शैलाधिराजप्रियकन्यकायाः ।
पदारविन्दं मुदमातनोतु श्रियं तनोतु स्वत एव दृष्टम् ॥ ३७ ॥

व्यासः—

इतीरितं तद्वचनं कुमारश्श्रुत्वा प्रहृष्टस्स गणेशयुक्तः ।
ययौ विमानोत्तमरत्नपीठे सिंहासनाधिष्ठित एव तुष्टः ॥ ३८ ॥
ततः परं दुन्दुभयो विनेदुर्ववुश्च वातास्सुखहेतवस्ते ।
मन्दारकुन्दादिमरन्दमन्दास्सुपुष्पवृष्टयद्भुतपुष्परूपाः ॥ ३९ ॥
ततो विमानाग्रपताकभागांस्तन्मन्दवातप्रसराल्पकम्पान् ।
ददर्श तत्राभयदानिवाम्बा नाट्याङ्गनामण्डलमम्बरान्ते ॥ ४० ॥
आचूलमूलामलरत्नराजिविराजिते यानवरे कुमारम् ।
गणेश्वरं चाचलराजकन्या मन्ये सुतं लोचनगोचरं तम् ॥ ४१ ॥

अम्बा—

अयं कुमारो मम षण्मुखोऽसौ गजाननोऽयं गणनायकोऽयम् ।

व्यासः—

इति प्रहृष्टा गिरिराजकन्या वचोविदं[1] वाचमुदीरयन्ती ॥ ४२ ॥
ददर्श दूरेणगजाननोऽसौ कुमारमालोक्य मुहुः प्रहृष्टा ।
इयं भवानीति वदन्कुमारं प्रियं सखायं परिषस्वजे तम् ॥ ४३ ॥

डुण्डिः—

पश्यादरेणाद्य कुमार गौरीं महेश्वरी श्रीचरणारविन्दम् ।
द्रष्टुं प्रवृत्तापि न सा निवृत्ता विश्वानि देवी भुवनानि चष्टे ॥ ४४ ॥

१. वचोऽमितं वाचमिति, वचो मिथो वाचमिति च पाठः ।

सेयं गौरी नाट्यनारीगणानां कृत्वावज्ञां संज्ञया स्वादरं माम् ।
दृष्ट्वा दृष्ट्वा त्वन्मुखाम्भोजमादौ देवं देवं राधसे चोदयन्ती ॥ ४.

सेयं माता सच्चिदानन्दभूता गीता सेयं वेदवेदान्तबृन्दैः ।
मन्दं मन्दं स्वाचरन्ती च वाचामेषा नेत्री राधसस्सूनृतानाम् ॥ ४

व्यासः—

इत्युक्त्वा तौ तद्विमानान्मनोज्ञादत्युत्तुङ्गादागतौ तां भवानीम् ।
नत्वा दूरात्तत्पदाम्भोजयुग्मं भूयो नत्वाप्यम्बिकालिङ्गितौच ॥ ४

ततः कुचप्रस्नुततत्पयोभिस्स्नेहस्वरूपैरभिषिच्यमानौ ।
मुदं परां प्रापतुरम्बिकायास्तौतत्पदाम्भोजविलोकनेन ॥ ४८ ॥

गणाश्च सर्वे ननृतुर्गणेशस्समागतष्षण्मुखसंयुतोऽयम् ।

गणाः—

अतः परं शङ्करदर्शनाय गौरी गमिष्यत्यविलम्बहेतोः ॥ ४९ ॥

अस्माकमप्यद्य शिवाधवस्य पदारबिन्दं सुरबृन्दवन्द्यम् ।
वन्द्यं मुकुन्दाक्षिसरोजपूज्यं भाग्यैरनन्तैर्विविधैरपारैः ॥ ५० ॥

जातास्तावद्ब्रह्मकल्पाश्च सान्तास्तेषामन्तस्तावदद्याप्यदृष्टः ।
नाट्यानन्दे नैव कालो भवान्या नीतस्तावच्चित्रमत्रापि किं वा ॥

गौरीनेत्रोन्मीलने मीलने वा कल्पास्तावत्कोटिशस्सम्भवन्ति ।
जातास्तावन्नाशमन्ते प्रयान्ति प्रायस्सेयं शङ्करस्यैव लीला ॥ ५२

अस्माकं वा नापराधो भवानी लीलानाट्यालोकनाय प्रवृत्ता ।
तस्याश्चित्तं किं पराधीनमम्बा नित्यानन्दा सर्वतन्त्रस्वतन्त्रा ॥ ५

अत्रास्माकं विश्वनाथानुगानां वृत्त्या तावन्नापराधाभिमानः ।
वृत्तिर्येषां शङ्करस्यैव सेवा गौरीसेवाप्यत्र कुत्रापराधः ॥ ५४ ॥

अस्मद्भाग्यादागतोऽयं कुमारस्तेनैवेयं नाट्यवार्ता गतैव ।
अम्बा तावत्तत्कुमारस्य वार्तां श्रुत्वा तावद्यास्यति श्रीमहेशम् ॥

व्यासः—

एवं तेऽपि परस्परं शिवकथावार्तां वदन्तः परं
प्राप्यानन्दमनन्तमिन्दुशकलालङ्कारवार्तारसैः ।
स्कन्दालोकनवन्दनादिविविधाचारोन्मुखास्ते सुखं
नन्दीशप्रमुखाः परस्परमुखाविर्भूतवागुन्मुखाः ॥ ५६ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे डुण्डिकुमारगौरीसमागमो नाम

चतुर्दशोऽध्यायः ॥ १४ ॥

---

## कुमारगौरीसंवादो नाम पञ्चदशोऽध्यायः.

व्यासः—

ततःपरमुमाकान्तं स्मृत्वा सा गिरिकन्यका। आनन्दजलधाराभिराक्रान्ता प्राह तंसुतम्

अम्बा—

कुमार शङ्करः क्वास्ति शङ्करः कुशली खलु। अद्य दृष्टःकिमीशानस्संर्वशोलोकशङ्करः॥
अत्रैव प्रेषितस्तेन महेशेन भवानपि। यद्वा पूर्वदिने यद्वा प्रेषितोऽसि दिनान्तरे॥ ३॥
शङ्करायोपहारोऽपि केन वा परिकल्प्यते। केनानुलेपनादीनि दीयन्ते मोहहेतवः॥४
केन कालापनयनं कालकालस्य तस्य वा। विलासनिलयाः के वा के वा तन्निलयालयाः
कुतः किं मद्विचारोऽपि क्वास्ति किं वा करोति सा। इतिमद्विषयाचिन्ताकिंमहेशस्यवर्तते

व्यासः—

इति गौरीवचश्श्रुत्वा कुमारश्चतुरः परम्। धीरो गम्भीरवचनमुवाच विनयान्वितः॥७

कुमारः—

चमत्कारकरं गौरि वचस्तव किमीदृशम्। वचनं वदनाम्भोजान्मरन्द इव निस्सृतम्
शङ्करश्शङ्करो नित्यं परमानन्दसागरः। महेशानन्दलेशेन सानन्दास्सामरा वयम् ॥
सच्चिदानन्दरूपस्य महादेवस्य शाम्भवि। त्वया विज्ञायते रूपं ततः प्रश्नः कथं कृतः

---

१. सर्वशोकभयंकरः इति पाठः।

कल्पान्ते सकलामरप्रमथनं कृत्वा पुनस्सादरं
　सृष्ट्वान्यानमरानपारमहिमा तान्पालयत्यम्बिके ।
कालस्यापि स काल एव स खलु ब्रह्मादिकान्संहर-
　न्नन्ते सन्ततमन्तरायरहितश्शान्तः कृतान्तान्तकः ॥ ११ ॥
तस्यैश्वर्यमनन्तमप्रतिहतं तस्यैव तद्भूतये
　भूतानां निवहास्स मृत्युरहितो मृत्युञ्जयस्सन्ततम् ।
अश्रान्तश्रुतिगीतकीर्तिरसकृद्विज्ञानमूर्तिस्स्वत-
　स्तद्वृत्तिः खलु शाम्भवोत्तममनःफुल्लारविन्दान्तरे ॥ १२ ॥
लोके पामरवृत्तयः कति सुरास्संहारकालेहता-
　स्तेनेशेन विहार एव सजगन्नाशो महेशस्य तु ।
ये नारायणपद्मजप्रभृतयः पारे परार्धंमुहु-
　स्तस्याम्बाकुशलं कुतः कुशलिनामग्रेसरश्शङ्करः ॥ १३ ॥
यत्पादाब्जरजःप्रभावविभवस्स्वर्गस्सुराराधितो
　वैकुण्ठोऽपि तदन्यल्लोककलनायासः प्रयासोऽपि नः ।
तस्यापारगुणार्णवस्य करुणासिन्धोस्सुधाम्बर्पणं
　तत्तद्देवतया परं कृतमिति ज्ञेयं भवानि त्वया ॥ १४ ॥
अन्यस्यास्ति न कृत्यमत्र गिरिजे जातु प्रजानां पति-
　र्जातस्तत्पदपद्मरेणुभिरयं जातोऽपि नारायणः ।
जाता सा कमला विधेश्च रमणी वाणी तथान्ये शिवे
　जातास्तस्य महेश्वरस्य महिमा वेदैश्च न ज्ञायते ॥ १५ ॥
अज्ञानां परमिन्दुशेखरकृपाशून्यात्मनां जायते
　तत्रान्यामरतुल्यतामतिरतिभ्रान्ता तदन्ताय सा ।
अन्तेनापि विना कृतान्त इति सा तावद्दुरन्तासतां
　सा तावन्नभवत्यनन्तमहिमा सोमावतंसः खलु ॥ १६ ॥
यं देवोत्तममामनन्ति बहुधा वेदाः परं यं परं

मायातीतमुमापतिं पतिममुं विश्वस्य विश्वस्य च ।
विश्वस्य त्रिपुरान्तकं त्रिणयनं वेदैर्मुनीन्द्रादयो
गन्धर्वा अपि किन्नरा अपि स मे तातोऽस्य मातश्शिवे ॥ १७ ॥
यल्लिङ्गार्चनतत्परास्सकृदपि स्वाराज्यराज्येश्वरं
धिक्कृत्यामरलोकनायकमपि श्रीकान्तमप्यन्ततः ।
स्वान्ते सन्ततमर्चयन्ति सुकृतैः पूताः कृतान्तान्तकं
तत्पादस्मरणेन तावदधुना धन्या वयं शैलजे ॥ १८ ॥
जायन्ते वहवस्सुरा अपि नरास्तेषां वरिष्ठं परं
मन्ये शङ्करमेव शाङ्करपदन्यस्तप्रसूनं नरम् ।
तस्मादप्यधिको न कोऽपि गिरिजे राजाधिराजार्चित-
स्सोऽयं शाङ्कर इत्यवैमि मनसा सत्यं त्रिसत्यं पुनः ॥ १९ ॥
उत्पत्तिस्थितिनाशसाधनतया ख्यातो महेशस्तत-
स्तं त्यक्त्वा कमुपास्महे गिरिसुते दुग्धं सितासंयुतम् ।
प्राज्याज्येन समन्वितं मुखगतं त्यक्त्वा पुरीषोदकं
कः पातुं यतते सतां मतिरियं सा नासतां जायते ॥ २० ॥
मन्ये दैवतदैवतं पशुपतिं मन्ये कृतान्तान्तकं
मन्ये देवशिखामणिं विधुलसत्खण्डावतंसं शिवम् ।
मन्ये दैवतसार्वभौममसकृन्मन्ये तदन्यं शिवे
कम्मन्ये मनसाप्यनन्यमनसा मान्योऽपि मान्योऽस्ति कः ॥ २१ ॥
जायन्ते च पुनःपुनः पुनरमी नारायणेन्द्रादय-
स्तेतावद्गिरिशार्चनादरगृहद्वारोरुदण्डाहतिम् ।
सोढ्वा मुण्डितमुण्डवज्जडधियो धिग्धिग्धिगित्यन्वहं
जन्मेति प्रलपन्ति वेत्रनिहता धावन्ति धावन्ति च ॥ २२ ॥
वन्दी सोऽहं शाङ्करे मन्दिरे मां वन्दित्वेन ख्यातमेवेति वेदाः ।

---

१. ये निन्दन्ति शिवं महेशममलं देवैस्तु संसेवितं सर्वज्ञं करुणाकरं पशुपतिं वाचामसेव्यं विभुम् । इत्यधिकः पाठः ।

तावन्नित्यं संवदन्तो वसन्ति स्वान्ते शान्ते शङ्करं पूजयन्ति ॥ २३ ॥
ब्रह्माण्डमण्डलविलोडनदण्डघातश्रान्ताश्चरन्ति कति ते शिवचिन्तकाः किम्
तच्चिन्तने सति कृतान्तकृता न भीतिश्चान्तिः कुतः क्व जनिदुर्दशयातिर्भा
प्राप्यापि जन्म मनुजत्वमुपेत्य तत्र ब्राह्मण्यमेत्य समधीत्य च वेदविद्याम्।
मीमांसया सह ततःपरमिन्दुमौलिध्यानं विहाय वसते कुगतिर्भवानि ॥ २
किं रासभोऽपि मणिभारपरीतदेहस्तद्भूषितो भवति तद्वदशाम्भवोऽपि।
विद्यामधीत्य यदि शाङ्करतां न याति तज्जन्म रासभसमानमिति स्मरामि

संसारे गिरिजामनोहरहरश्रीपादपद्मार्चनं
तल्लिङ्गार्चनमेव वा स्मरहरध्यानं क्षणं वा यदि ।
दैवात्स्यादिगिरिजे तदैव सफलं जन्मेति मन्ये मुहु-
र्नोचेत्पातकपावकाकुलमहाज्वालाकुलो जायते ॥ २७ ॥
जायन्ते जननीवयःपरशवः किं तैरनन्तैः फलं
यद्यश्रान्तमुमासहायचरणाम्भोजार्चनानादरः ।
तर्हि स्यात्खलु नारकी नर इति स्वर्गापवर्गप्रदं
भर्गं कोऽपि भजत्यनन्यमनसा धन्यस्स धन्याग्रणीः ॥ २८ ॥
तत्पादाम्बुजवन्दनेन सफलं जन्मेति मन्ये शिवे
यच्चित्तं क्षणमेव वा शिवरतं तद्ध्यानधारा यदि ।
चित्ते तत्पदरेणुभिर्जगदिदं पूतं परं पावनं
सत्यं तस्य खलून्नतं कुलमतस्तत्सेवकान्नाधिकः ॥ २९ ॥
लोके शाम्भवपुङ्गवः खलु खलध्वान्ताद्भुताहस्कर-
स्तत्पादाम्बुजरेणुमात्रममरास्सर्वेऽपि वाञ्छन्त्यहो ।
तच्चेन्मूर्ध्नि तदा सदाशिवकृपा स्यादित्यवश्यं मुदा
कीटत्वं समुपेत्य शङ्करगृहद्वारे चरत्यम्बिके ॥ ३० ॥
धन्या तज्जननी पितापि स महान्वंशोऽपि धन्यः परं
तद्भृत्योऽपि तदाश्रितोऽपि स महांस्तच्चेटिका वाटिका ।

यच्चित्तं क्षणमात्रमप्यघहरे लिङ्गेऽपि वैश्वेश्वरे
संसारातुलतूलशैलविलयाङ्गारे स हारे चिरम् ॥ ३१ ॥
यो नित्यं शिव एव दैवतमिति ज्ञात्वा तदर्चारत-
स्तं ध्यात्वापि विमुच्यते खलु जनिस्तद्दासदासान्वये ।
दैवाज्जन्म भवत्यदुर्लभमिदं नेत्याहुरत्यास्तिका-
श्श्रुत्यर्थोऽपि तथाविधश्श्रुतिरिति व्यर्था न तत्प्रार्थना ॥ ३२ ॥
मन्ये दैवतदैवतं शिवमुमे वेदान्तवाक्यैरत-
स्तत्पूजानिरतं नमामि मनसा तद्दुर्लभं मेनिरे ।
गीर्वाणाः परमम्बिकापतिपदाम्भोजार्चनं दुर्लभं
तल्लिङ्गार्चनमप्यनन्तफलदं तद्दुर्लभं मेनिरे ॥ ३३ ॥
मानातीत इति श्रुतोऽपि महिमा माहेश्वरस्तं कथं
वेदो वेद न तेन यश्च विदितस्तं शाम्भवो वेद तम् ।
ते वेदाः प्रणमन्ति देवसहितास्तत्पूजने सादरा-
स्साक्षात्साम्ब इति श्रुतिस्मृतिशिरोरत्नं[1] श्रुतं तन्मया ॥ ३४ ॥
पुण्यं जन्मनि जन्मनि प्रतिदिनं कल्पावसानावधि
प्राचीनामितयागदाननिचयाभ्यासानुबन्धं यदि ।
तस्मिन्त्सत्यपि शाम्भवोत्तमपदाम्भोजाश्रये जायते
भक्तिर्भर्गपदाम्बुजे गिरिसुते सा दुर्लभा सर्वथा ॥ ३५ ॥
एकं सार्थकमित्यवैमि गिरिजे लोकेषु वेदेष्वपि
प्रख्यातं शिवलिङ्गपूजनमिदंसर्वात्मना दुर्लभम् ।
ज्ञात्वा दुर्लभमित्यपि प्रतिदिनं तत्पूजनायोद्यतो
धन्योऽतश्शिवपूजकादपि वरो धन्यः क्व वा भूतले ॥ ३६ ॥
लीलामानुषविग्रहश्शिवरतश्शैवश्शिवः केवलं
तम्मन्ये शिवमेव तत्पदरजो मान्यं सुराणामपि ।

१. श्रुतिशिरोरत्नमिति पाठः ।

तद्देहश्शिवमन्दिरं शिवतरस्तस्मिन्त्सदा क्रीडति
व्यापारान्तरमन्तरा गिरिसुते त्यक्त्वापि तन्मन्दिरम् ॥ ३७॥
ब्रह्मत्वादिकमानुषङ्गिकफलं मन्ये शिवाराधने
मुख्यं तस्य फलं किमप्यनुमितं श्रुत्यापि तत्सर्वथा ।
दुर्ज्ञेयं शिवरूपता फलमिति ज्ञेयं कथं वा मया
तस्यानुस्मरणेन तद्यदि तदा किं तत्फलं शैलजे ॥ ३८ ॥
एवं मे मतिरिन्दुशेखरपदाम्भोजार्चनादत्र सा
जातापि स्थिरतामुपेत्य पुनरप्यभ्यासमार्गं गता ।
त्वत्पादाब्जविलोकनेन गिरिजे त्वं शङ्कराधाङ्गमि-
त्यम्बाहं तनयस्तवेत्यपि वरो देयो दृढोऽप्यस्त्विति ॥ ३९ ॥
अम्बाहं गणनायकोऽपि गिरिशेनाद्याधुना प्रेषित-
स्सन्तुष्टस्त्वयि शङ्करश्शिवधनं त्वं तावदम्बाधुना ।
त्वय्येवास्ति मनश्शिवस्य न शिवे चिन्तान्तरं जायते
मूर्तिस्ते शिवचेतसि स्फुरति सा दृष्टेयमत्युत्सवैः ॥ ४० ॥
ध्यानारूढमहेशचेतसि शिवे त्वं नृत्यसि त्वां परं
मन्ये दैवतदैवतं किमितरद्ध्येयं महेशस्य वा ।
किं कृत्यान्तरमीश्वरस्य जगतां जन्मस्थितिध्वंसनं
तत्पादाङ्गुलिचारणादिति शिवे कृत्यान्तरं किं भवेत् ॥ ४१ ॥
प्रीतिर्या त्वयि शङ्करस्य गिरिजे सा तत्समानापि वा
न क्वापीति मतिर्ममास्ति शिववाग्व्यापारसारैर्मिता ।
सा तावन्न गणेश्वरेऽपि न मयि स्वस्मिन्नपि स्नेहभू-
स्त्वन्मूर्तिं परमित्यवैमि सकलानन्दप्रदानोन्मुखे ॥ ४२ ॥

व्यासः—

इत्युक्तं गिरिराजराजतनया तद्वाक्यमाकर्ण्य सा
पियूषद्रवरूपसम्प्रतिममप्यास्वाद्य हृद्यं मुहुः ।

आलिङ्ग्यात्मजमादरादतिदृढस्नेहाम्बुधारावृतं
चक्रे सा गणपं कुमारमसकृत्स्पृष्ट्वा कराभ्यां द्विजाः ॥ ४३ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे कुमारगौरीसंवादो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

नन्दिकेशकुमारसंवादो नाम षोडशोऽध्यायः.

व्यासः—

ततः परं कुमारेण प्रणता गिरिकन्यका । गणेशेनापि विनता प्राह मन्दं विचक्षणा ॥

अम्बा—

महेश्वरोदीरिता या वाणी मद्विषये सुत । कथं भूता तत्स्वरूपं स्मृत्वा स्मृत्वा पुनर्वद ॥

कुमारः—

वन्दे सुन्दरमन्दारसुरजःपुञ्जपिञ्जरम् । सुरनारीशिरश्चारिगौरीचरणजं रजः ॥३॥

व्यासः—

इत्युक्त्वा तत्पदाम्भोजं नत्वा मूर्ध्ना मुहुर्मुहुः । मधुराक्षरसंपूर्णां मधुराङ्गिरमाह च ॥

कुमारः—

गिरिजे शङ्करः प्रातर्मामाहूय दयानिधिः । गिरिजाचरणं द्रष्टुं प्रयाहीत्यब्रवीन्मुदा ॥ ५॥

तच्चित्तवृत्तिर्गिरिजे शरीरे रुचिरे चिरम् । अतिसुन्दरमित्यम्ब विलम्बं सहते स किम् ॥

शिवः—

कुमार गिरिजा परं चिरमुदारहारादरा
सहारहरहारयोः किमपि सान्तरं पश्यति ।
[1]विहाय विरहादहो हरहरामराधीश्वर
स्मर स्मरहरेति मामिति करोति चिन्तां न किम् ॥ ७ ॥

व्यासः—

एतस्मिन्नन्तरे काले जयां च विजयामपि । प्रेषयामास गिरिशस्तामपूर्वां शिवां प्रति ॥

ताभ्यामागत्य सहसा नत्वा तच्चरणाम्बुजम् । कुमारमपि नत्वा तं स्थितंपार्श्वेमनोहरे ॥

---

१. विहारविरहात् इति पाठः ।

ततस्ताभ्यां समानीतान्यपाराभरणानि सा। दुकूलानिविचित्राणिफलान्यपिदद
ततस्साभरणा गौरी सेयं सत्वरमस्त्विति। निर्जगाम बहिर्द्वारं कुमारगणपान्वि
ततः परं नन्दिकेशप्रमुखाश्शिवकिङ्कराः। नत्वा कृताञ्जलिपुटास्तुष्टुवुर्हृष्टमान
स्तुत्वा ततः परं भक्त्या प्रणतान्पुनरादरात्। उवाच वचनं चारुकुमारःप्रीतमा

कुमारः—

शङ्करालोकनोद्योगः कर्तव्यस्त्वरया त्वया। अतः परंविलम्बोऽपिनसम्भावित
सन्नद्धानिविमानानिभवन्त्यद्यामितान्यपि। मुक्तामालादिसङ्कीर्णान्यपाराण्यपि
अम्बाविमानमानेयंपरिष्कारः कृतो न वा। कामगस्यविमानस्यतस्यमुक्ताफलै
सुदुकूलपताकाश्च छत्राण्यद्य सहस्रशः। विमानशिखरे सन्तु सन्त्वन्येष्वपि को
सुमन्दारमरन्दानां धारास्सन्तु सहस्रशः। मन्दारमालानिकरैरामूलाग्रविजृम्भि
सुकल्पतरुगुच्छानां छायया छन्नमस्तु तत्। तन्मण्डितंभवत्वाशुचन्द्रमण्डलमण्डि
तारतारामालिकाश्च सान्द्रास्सन्तु सहस्रशः। विद्युद्दामार्बुदैरस्तु परिवीतं तदुन्नत
इन्द्रनीलमणिछाया मध्येमध्येऽनुवर्तताम्। रत्नसिंहासनैर्दिव्यैरपारैर्वीतमस्तु तत्
तन्मध्ये मणिशोभाभिर्घनीभूताभिरुन्नता। वेदिका रचनीया सा परितस्तारका
मध्ये सुधाकरकरप्रकरक्षालिता पुनः। वेदिका रत्नमालाभिश्चित्रैरस्त्वावृता पुनः॥
तत्र सिंहासनं दिव्यं सुमेरुसदृशं श्रिया। रचनीयं मृदुतरं रत्नछायाभिरादरात्॥
विराजितं भवत्वेतदपारैश्चामरैरपि। रत्नसोपानमार्गाश्च तत्र संत्वाशु कोटिशः॥
उत्फुल्लकुसुमच्छन्ना मार्गास्ते समरन्दपाः। भवन्तु सत्वरं तत्र मन्दो वातः प्रवर्त
सुमेरुतुङ्गशिखरप्रभाकूटजयोद्यतैः। तद्रत्नकलशैर्वीतमपारैरस्तु सत्वरम्॥ २७
हरमन्दिरमार्गोऽपि सदुर्गो मास्तु भर्गतः। भीतिरस्तुसमार्गोऽतरुछादितोऽस्तुसुधा
सुधाकरकरछाया छादिते पथि शङ्करः। तद्वनेन समायाति कदाचित्तन्न विग्रहे
मृदुलो भर्गमार्गश्चेत्स्वर्गस्यापि तिरस्क्रिया। भवत्यतः प्रवृत्तिश्च सुलभा सा सुखा
प्रपाश्चकोटिशस्सन्तुसुधाधाराभिरध्वनि। रत्नमालापरिक्रान्तास्तेमार्गास्सन्तुकोटि
मुक्ताजालपरिच्छन्नाःपुष्पासारसमावृताः। फलैररप्यतुलैःपूर्णास्सन्तुमार्गास्सहस्र
तरवो दूरतस्सन्तु दिगन्तं यान्तु ते परम्। अत्युन्नताश्चकर्तव्याः कुसुमासारमण्ड

त्रनाट्याङ्गनास्सन्तुकोटिशोऽपिपदेपदे।सौन्दर्यधारासङ्क्रान्तास्तास्सर्वानवयौवनाः॥
प्प्रासादरचना विधेयास्सादरं पथि। प्रासादाः कोटिशस्सन्तु सुपुष्पामार्गपार्श्वयोः॥
धाफलानिविमलान्यनन्तान्यपितेष्वपि। सन्तु तेषुसुधाधारास्तटित्कुलसमाकुलाः॥
त्नमालाभूषिताश्च चन्द्रचारुकरावृताः। सर्वे नवत्वमापन्नास्सन्तु तावत्प्रतिक्षणम्॥३७॥
न्मार्गे रुद्रवीणानां रम्याणां सन्तु कोटयः। नखाघातं विना सर्वे मधुरध्वनिसंवृताः॥
कानाञ्च पिकानाञ्च कोटयस्सन्तु सत्वरम्। मरालराजराजीनांराजीनामपिकोटयः॥
रांसि कोटिशस्सन्तुफुल्लराजीवराजिभिः। विराजितानिरजसापिञ्जराण्यप्यनुक्षणम्॥
द्रुमाणांलतास्सन्तुकोमलाःकोटिशःपथि। नाट्याङ्गनानुकरणंकृत्वाकृत्वाप्रतिक्षणम्॥
न्मार्गे पुष्पवाटीनां कोटयस्सन्तुकोटयः। उत्फुल्लपद्मरूपाणां मन्दिराणामसङ्कुलाः॥

व्यासः—

वंनियोगमासाद्यसुयशापतिरादरात्। प्रेषयामाससगणांस्तत्तत्कार्यक्षमान्वहून्॥४३॥
तस्मिन्नन्तरे काले भृङ्गी शङ्करमन्दिरात्। समागतो विमानेन कम्पमानेन वायुना॥
राद्विमानमालोक्य कुमारः कम्पमावहन्। नन्दिकेशमुवाचेदं वचनं तं विचक्षणः॥

कुमारः—

न्दिकेशेशमस्माकं शतांशेनापि दुर्लभम्। ममाप्यागमने काले भूयानेवाभवत्खलु॥
द्विमानं समायाति त्वरया कस्यतद्भवेत्।शङ्कराज्ञात्वरांप्राप्यप्रायःकोऽपिसमेतिमाम्॥
तस्त्वया विमानेनगन्तव्यमतिसत्वरम्। विचारोऽपित्वयाकार्यस्तेनापि सहसादरम्॥
तेन सहवक्तव्यं निष्ठुरं चतुरं वचः। न[1] कर्णारुन्तुदं याहि मधुरं वद सादरम्॥ ४९॥
धुराक्षरवाणीनां पात्रं शङ्करकिङ्कराः। तेषु निष्ठुरमुक्त्वान्ते नरकंयातिसत्वरम्॥
रा हिमगिरिप्रान्ते शङ्कराराधनोत्सुकः। शुकनामामुनिर्जातोजन्मकोटितपःफलैः॥
त्रतुङ्गानिलिङ्गानिकोटिशस्सन्तितान्ययम्। पूजयित्वास्थितस्तत्रस्वकरार्जितसाधनैः
नीहारधारा लिङ्गेषु तेन तेषु प्रकल्पिता। मन्दारकुसुमासारैः पूजितानि प्रतिक्षणम्॥
अर्कसम्पर्कभीत्यापि सुपुष्पपटमण्टपैः। लिङ्गमण्डलमाक्रान्तं चकार च मनोहरम्॥
ङ्कराचारनिरतैरपारैश्शाङ्करैर्वृतः। सम्पूजयति लिङ्गानि यामे यामे विशेषतः॥५८॥

१. न कर्णारुन्तुदनायातः इति पाठः।

पूजयामास लिङ्गानि बिल्वकोमलपल्लवैः । विमलैरतुलैः काले काले जललवाङ्कु
तारकाकर्षणं कृत्वा तारामालासमाकुलम् । शिवलिङ्गालयंचक्रे परितः परिशो
अमन्दकुन्दमन्दाररजःपुञ्जैस्समाकुलम् । लिङ्गमूलं चकारासावनुवेलं स्वली
दिव्यान्नपर्वतैरेव नैवेद्यमतिसादरम् । सङ्कल्पयति शुद्धात्मा तपसा परिकल्पितैः
परमान्नप्रवाहाश्च शर्करागिरिसंयुताः । आज्यप्रवाहसम्बन्धास्तेनेशाय प्रकल्पि
वटकोदुम्बरादीनि पक्वान्नान्यपि कोटिशः । शर्करान्नसमेताश्च कल्पयामाससा
मधुक्षीरप्रवाहाश्च कल्पितस्तेन कोटिशः । सुधाप्रवाहास्तेनैव पानार्थमपि कल्पि
एलालवङ्गकर्पूरखदिरादिसमन्वितान् । ताम्बूलशैलान्विविधान्कल्पयामास कोटि
चन्दनादिसकर्पूरकस्तूरीसंयुतान्यपि । कल्पयामास तपसा चन्द्रकल्पानिशम्भवे
अपारपुष्पमालाभिरतुलाभिरनेकधा। पूजयामास नियमात्तपसा प्रीणयञ्छिव
रत्नछत्रैश्चामरैश्च कोटिशः परिकल्पितैः। रत्ननीराजनैर्दिव्यैश्चकार शिवपूजन
तस्य तावत्कलत्राणामयुतं यौवनान्वितम् । तेनैव कल्पयामास नाट्यं शङ्करमा
गानं च कारयामास रुद्रवीणाभिरादरात् । दुन्दुभिध्वनयस्तेननिर्मितास्स्वतपो

तथा शिवरतस्तत्र रुद्राध्ययनतत्परः । हरशिष्यसमाक्रान्तो हारान्त्संयोजयंस्त
हारनैवेद्यशेषेण हाराणामेव भोजनम् । कल्पयामास नियमात्सरसेन विशेषतः ।
विचित्राणिदुकूलानिशङ्करायार्पितान्यपि।हारेभ्यःप्रददौभक्त्यादिव्यान्याभरण
यदा यानि प्रदत्तानि दुकूलाभरणान्यपि।तानिदत्वाशाम्भवेभ्योददावन्यानि
छत्राणि चामरादीनि नूतनानि दिने दिने । कल्पयामासतपसातत्फलंतदिहा
विना न तपसा तावत्सामग्री तावती ततः । तेनैव कल्पयामास शिवपूजनसाध
बहुजन्मार्जितेनापि तपसा तेन किं फलम् । यदि शङ्करपूजायामुपयुक्तं तु त
तपसापि समासाद्य शिवपूजनसाधनम् । तेनार्चयित्वा देवेशं कृतकृत्यो भवेन्न
तत्तपः फलितं तेन येन साधनमुत्तमम् । सम्पादितं महादेवपूजनाय प्रतिक्षणम्
तपश्चेच्छिवपूजायामुपयुक्तंन तर्हि तत् । तपः किन्तु महारण्यं शिलावृक्षादिरो
तपसा प्राप्य भाग्यानि भाग्यवन्तः परात्परम् । शङ्करं पूजयन्त्यन्ये दुर्भगाएव कं
तपस्तावद्विधेयं स्याद्यावच्छङ्करपूजने । साधनं प्राप्यमेतेन न तत्स्यात्तदनन्तर

ङ्करार्चनसामग्री प्राप्तिरस्तु तपः फलम् । फले प्राप्ते पुनस्तेन साधनेनालमित्यलम् ॥
येन तपसा प्राप्तं शिवपूजनसाधनम् । न तत्तपः किन्तु तत्तु तन्तुवायविचेष्टितम् ॥
पसा प्राप्य सामग्रीं शङ्कराराधनस्य यः । स शङ्कराराधनेन मुक्तो भवति नान्यथा ॥
द्भाग्यमप्यभाग्यंस्याद्येननाराधितश्शिवः । कृतेशिवाराधनेतुभाग्यंभाग्यत्वमाप्नुयात् ॥
ग्यानामपि संवादः पुरा कोऽपिश्रुतोमया। ससंवादस्स्मृतस्सद्यःपरमानन्दसाधनम् ॥
ग्याधिदेवतास्सर्वास्सर्वसौभाग्यसंयुताः। रत्नमण्टपमध्यस्थसिंहासनसमाश्रिताः ॥

भाग्याधिदेवता—

त्रैकदेवता प्राह सुन्दरं वचनं तदा । भवतामुपयोगोऽत्र कुत्र वा जायते फलम् ॥
तेमहेशपूजायामुपयोगोऽधुना वद । वदत्वं च वदत्वं च वदत्वं च वदाशुमे ॥८८॥
नृतं नैव वक्तव्यमिदं शङ्करमन्दिरम् । अत्रानृतप्रवादेन विनाशोभवति ध्रुवम् ॥
त्यस्वरूपो भगवानुमाकान्तस्तथासति । तत्सन्निधाने वक्तव्यं सत्यमेवाद्य सादरम् ॥
न्यत्र यत्र कुत्रापि भवत्वनृतभाषणम् । फाललोचनदेशे तु सा वार्ता न हितावहा ॥
सत्यरूपनिकटे भवत्वनृतभाषणम् । सत्यभूतमहादेवमन्दिरे तत्कथं भवेम् ॥९२॥
ङ्करे सत्यभूतत्वमृतं सत्यमितिश्रुतिः । वदत्येवं न चान्यस्य सत्यत्वंश्रुतिचोदितम् ॥
त्येरमन्ते मुनयस्सत्यं शङ्कर एव सः । तत्सन्निधाने त्वनृतं महापातकसन्निभम् ॥
शिवसन्निधिमाश्रित्य कृतं पुण्यश्च पातकम् । अनन्तमिति निर्णीतमतस्सत्यं वदाधुना ॥

कुमारः—

ति तद्वचनं श्रुत्वा क्वापि भाग्याधिदेवता । सत्यमेवाह निपुणाकृत्वा शपथमीश्वरे ॥

भाग्याधिदेवता—

न्मन्दिरे निवासो मे सतावदतिशाम्भवः। तद्वारिमत्तमातङ्गाःकोटिशस्सन्तिसर्वदा ॥
लतुङ्गतुरङ्गाणां कोटयस्सन्ति सर्वदा । गोयूथकोटयस्सन्ति महिषीणां च कोटयः ॥
वेचित्ररत्नभारणां कोटयस्तस्य मन्दिरे । सुमेरुतुल्यास्तद्गेहे तप्तकाञ्चनपर्वताः॥ ९९॥
देव्यान्नराशयस्सन्तिकोटिशःकमलाननाः।नाट्याङ्गनाःकोटिशस्तास्सर्वाभरणभूषिताः
ौन्दर्यधाराधीरापि नारीणामनुवर्तते। तासां तद्वर्णनं तावत्कर्तुमेव न शक्यते॥१०१॥
तावद्भाग्यमेतस्य पुत्रास्सन्ति सहस्रशः । प्रवीणाश्शिवविद्यायांशाम्भवाएवकेवलम् ॥

भृत्याश्वकोटिशस्सन्तितेतावदतिशाम्भवाः। दास्यश्चकोटिशस्सन्तितास्तावदति
प्रायस्सुराङ्गनाएव दासीत्वं समुपागताः। सदा कुर्वन्तितत्सेवांशाङ्कराग्रेसरस्य
भृत्यास्तेऽप्यमरा एव तद्भृत्यत्वमुपागताः। तत्सेवयामहादेवस्सन्तुष्टो भवतीत्य
ऐरावतोऽपि रूपाणि धृत्वा तावत्स कोटिशः। तद्द्वारे गजरूपेण तिष्ठतीत्यवगम
सदेवाऽश्वोऽश्वरूपाणि धृत्वातद्द्वारि कोटिशः। तत्तुरङ्गस्वरूपेण तिष्ठतीत्यवगम
तत्कलत्राणिरम्याणितेनैवशिवमन्दिरे। नियोजितानिनाट्यायपूजान्तेप्रतिवा
नृत्यन्तिशिवलिङ्गाग्रेतानगानपुरस्सरम्। तत्कलत्राणिसोत्साहंनाट्यमभ्यस्यसत
पञ्चामृताभिषेकेणगव्यस्यविनियोजनम्। तद्गेहे रत्नलिङ्गानि बहूनि विविधान्य
तत्पूजार्थं कोटिमात्रंधनांशस्यव्ययस्ततः। पूजान्ते तद्धनं तेन हारेभ्यो दीयते
पर्वताकारपक्वान्नैर्नानारसविजृम्भितैः। परमान्नैश्च नैवेद्यं तेनेशाय प्रदीयते ॥
तत्सर्वं शिवभक्तेभ्यो दत्वा शिष्टंसुतैस्सह।भुक्त्वावशिष्टंभार्याभ्योदत्वानृत्यतिशाम
रुद्राक्षमालाभरणोरुद्राक्षकवचान्वितः। रत्नलिङ्गार्चको नित्यं भूतिभूषितविग्रहः
भूतिरुद्राक्षरहितो न तस्य नगरे नरः। अन्ततः पशवोऽप्यस्य भूतिरुद्राक्षभूषण
एतादृशस्य सदने सर्वदा स्थीयते मया। नतद्गृहपरित्यागो रोचते सर्वथा मम।

कुमारः—

इति तद्वचनं श्रुत्वा तदन्ये देवतास्ततः। लज्जाननताननास्सर्वाश्चुक्रुशुस्ताःपरस

भाग्याधिदेवता—

अहोनतादृशंभाग्यमस्माकमितिचिन्तया। अशैवभोगाय धनं जायते सर्वमित्यपि
इयंभाग्यवतीधन्यासभाग्याभाग्यदेवता। वसतिश्शाम्भवागारेयस्मादस्यास्सुखा
अतः परंकिलास्माभिरशाम्भवगृहेस्थितिः।न कर्तव्या न कर्तव्या सर्वथापीतिनि
ततः परं तद्गृहाणांवार्तांत्यक्त्वाविशेषतः। तास्सर्वाश्शांभवागारे वसतिं चक्रुराद
तथाहि सति भाग्यस्यभाग्यत्वमपि सर्वथा। शिवपूजानुकूलत्वमन्यथा तत्कथं
अतस्तपःफलंभाग्यंतद्भाग्यस्यापिभाग्यता। शिवार्चनोपयुक्तत्वात्तद्भाग्यस्यापित
शिवपूजोपयुक्तानां तरूणामपिवस्तुतः। मुक्तिरन्यस्य का वार्तासाक्षात्तदुपयो
तादृशस्यशुकस्यापिशाङ्करस्यकदाचन। उक्तं निष्ठुरमेकेन सतावन्निरयं गतः॥

एवं शङ्करपूजनस्य महिमा मानान्तरागोचर-
स्सोऽयं लोचनगोचरः कथमतो वाग्गोचरो वा कथम् ।
तस्मान्निष्ठुरभाषणैरलमलं श्रीकालकालार्चके
सत्यं यन्मधुराक्षरं तदधुना वक्तव्यमत्यादरात् ॥ १२६ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे नन्दिकेशकुमारसंवादो नाम षोडशोऽध्यायः ॥ १६ ॥

---

## यमशुकसंवादो नाम सप्तदशोऽध्यायः.

व्यासः—

ते तद्वचनंश्रुत्वा कुमारं नन्दिकेश्वरः । कृताञ्जलिपुटः प्राह विनयानतकन्धरः॥ १॥

नन्दिकेश्वरः—

मार भगवन्केन तस्मै निष्ठुरभाषणम् । कृतं तन्निष्ठुरस्यापि स्वरूपं वद सादरम् ॥
निष्ठुरोक्त्या तस्यापि जाता सा यातना कथम् । तत्सर्वमादरेणाद्य वक्तुमर्हसि षण्मुख
वतत्वज्ञवर्योऽसि शिवानुग्रहभाजनम् । ततस्त्वमधुना तावत्तत्सर्वं वद सादरम्॥४॥

व्यासः—

ति तद्वचनं श्रुत्वा प्रहृष्टष्षण्मुखस्ततः । प्रक्रान्तं पूर्ववृत्तान्तं वक्तुं सस्मार शङ्करम्॥

कुमारः—

शिवार्चकं शुकं दृष्ट्वा मुनिः कश्चित्तपोनिधिः। अम्बरीषकुलोत्पन्नोनिष्ठुरंप्राहसत्वरम् ॥

मुनिः—

ाग्यसम्पादनेनास्य व्ययस्स्यात्तपसः खलु। शिवार्चनेन किं कृत्यं तपश्चेन्नष्टमद्भुतम्॥

कुमारः—

त्युक्तं तद्वचश्श्रुत्वा तमसंभाष्यमित्यपि । मत्वा शिवार्चनोद्योगं चकार पुनरादरात्॥
तस्स मुनिशार्दूलः फलमूलजलाशनः। मृतस्सर्पेण सन्दष्टः कष्टेन व्याकुलोऽप्यभूत्॥
तः परं कालदूताः कालेन समुपागताः। कुम्भीपाके पातनीयस्त्वरयेति विचक्षणाः॥
दा यमश्चित्रगुप्तं धर्माधर्मविवेचकम् । प्राहानेन कृतं पापं किं किमित्यादरेण सः ॥

इति तद्वचनं श्रुत्वा चित्रगुप्तो विचक्षणः । यमं प्राह विनीतस्सन्कृताञ्जलिपुटः

चित्रगुप्तः—

यमानेन कृतं पापं कल्पान्तेऽपि न नश्यति । महापातककोटीनां जनकं तत्पुनः
कया यातनया तस्य पापस्य स्याद्विनाशनम् । पुनःपुनर्वृद्धिमेव तत्प्रयाति प्रति
ईदृशं पातकं लोके न भूतं न भविष्यति । न वर्ततेऽपि कुत्रापि नूनं ब्रह्माण्डम
तत्पापस्यानुवादोऽपि कर्तुमेव न शक्यते । यतस्तदनुवादेन प्रत्यवायो भविष्य
विना तदनुवादेनाप्याकल्पान्तमयं यम । अघोरनरकावासं करोतु त्वरयाधुना
एतद्दर्शनमात्रेण यत्पापं समुपार्जितम् । तन्नाशाय प्रयत्नोऽपि कर्तव्यः खलु सा
नयन्तु दूतास्सहसा शूलघातपुरस्सरम् । तं पापिष्ठवरश्रेष्ठं मास्तु तस्य विलोक
येन ज्ञात्वा प्रतिदिनं कृताः पातककोटयः । कल्पावसानपर्यन्तं सोऽविमुक्तो भ
महापातकराशीनां कल्पान्ते विलयो भवेत् । एतद्दर्शनजं पापं न लयं यास्यति ध्रु
एतद्विलयनोपायश्चिन्तनीयस्त्वया मया । श्रुतितत्त्वं विचार्यादौ मर्यादां सुकृत

कुमारः—

इत्युक्तं तद्वचश्श्रुत्वा कालो व्याकुलमानसः । चिन्तयामासबहुधाखिन्नखिन्नः प्र

यमः—

अतः परं किमस्माकं साधनं पापनाशने । किमर्थमागतं मोहाद्दुरदृष्टस्य किं फलम्
प्रातः काले मुखं दृष्टमस्य दुष्टस्य दुष्कृतम् । किमुपस्थितमस्माकं दुःखरूपफलेन
दुरदृष्टस्य महिमा दुर्जयः खलु वस्तुतः । अतः परं किमस्माभिः कर्तव्यमधुना
विचार्य नागतं तस्माद्वृत्तो न शकुनोऽपि नः । अस्मदागमने प्रायो नास्माभिश्शङ्कर
स्मृत्वा शङ्करमाराध्यममरप्रवरं परम् । यो याति तस्य विजयस्सुखान्यपि पदेपदे
शङ्कराराधनं कार्यं गमने समुपागते । तद्दूरगमने तावददूरगमनेऽपि वा ॥ २९ ॥
नानासाधनयुक्तोऽपि शङ्कराराधनं विना । तैस्साधनैः फलं तावन्न प्राप्नोत्येव स
अलं बहुविधैर्यत्नैरलमायासकोटिभिः । अलमन्यैरुपायैर्वा कालकालार्चनं विना ।
साधनानां साधनत्वं सम्पादयति सत्वरम् । महेशाराधनं तेन विना तत्स्यादसाध
शङ्कराराधनं मुख्यं सर्वसाधनसाधनम् । तदेव सफलं मन्ये तदन्यद्विफलं खलु ॥

जानन्त्येव मूढास्ते मुख्यन्तु फलसाधनम् । शङ्करार्चनमेवेति वेदवाह्यास्स्वभावतः ॥
स्यचिद्भूरिपुण्यस्य शिवाराधनमेव मे । फलसाधनमित्येषा प्रमा भवति भाग्यतः ॥
शङ्करा एव तत्वज्ञास्तेषामभ्युदयस्सदा । शिवाराधनमात्रेण नान्यापेक्षा प्रजायते ॥
शक्तिः कल्पतरूणां या शक्तिस्सुरगवामपि। ततोऽप्यनन्तगुणिता सा शिवाराधनस्य हि॥
शङ्करार्चनसामर्थ्यं न कस्यापि जगत्त्रये । येन ब्रह्मत्वमाप्नोति विष्णुत्वं मुक्तिमन्ततः॥
शिवार्चनरसः कोऽपि भूरिपुण्यस्य जायते । स रसो दुर्लभो लोके सुधारसरसस्स तु ॥
शङ्करानुग्रहादेव शिवार्चनमतिर्भवेत् । सैव सूते फलं तावद्विमलं तदपेक्षितम् ॥ ४० ॥
शिवाराधनमेवैकमभीष्टफलसाधनम् । तदन्यत्साधनाभासं तेन किं जायते फलम् ॥
पिपासावगमो लोके कथं वा मृगतृष्णया । स चेत्तया तदा नस्याज्जलपानादिकक्रिया ॥
शुक्तिका रजतत्वेन ज्ञाता किं केनचित्कचित् । साधयत्यतियत्नेन कामिनीकरकङ्कणम् ॥
तस्माद्भ्रमास्पदं यावत्तावन्न फलसाधनम् । साधनत्वेन विज्ञातं फलं साधयति ध्रुवम् ॥
प्रमितं साधनत्वेन केवलं शिवपूजनम् । तेनैव सिद्धिरन्येन न सिद्धिरुपजायते ॥ ४६॥
तथासति प्रसङ्गेनाप्यनायासेन साधितम् । शिवार्चनं फलं सूते नित्यं यद्यदपेक्ष्यते ॥
अतः परं प्रयत्नोऽपि कर्तव्यश्शिवपूजने । तेन तद्दर्शनोत्पन्नपापनाशो भविष्यति॥ ४७ ॥
महाघगिरिसङ्घातवज्रमीश्वरपूजनम् । तेन तत्पापविलये पापशङ्का न जायते ॥ ४८ ॥
तावत्तापभयं भक्त्या यावन्नाराध्यते शिवः । तदाराधनमात्रेण दग्धाः पातककोटयः ॥
महापापशरीरस्य विषं शङ्करपूजनम् । तेन तावत्तस्य नाशस्सत्वरं खलु जायते ॥ ५०॥

कुमारः—

एतस्मिन्नन्तरे तत्र कश्चिदार्तस्वरश्श्रुतः । ततः परं म्लानचित्तस्त्वरया स ययौ यमः ॥
ततः परं तं विलोक्य भस्मोद्धूलितविग्रहम् । शिवलिङ्गार्चकं शुद्धं ददर्श मुनिपुङ्गवम् ॥
ततः प्रणम्य तं भक्त्या स कालोऽपि कृताञ्जलिः। तमुवाचाथ त्रिनयाच्चित्रगुप्तेन संयुतः॥

यमः—

वनावासस्य सवने सवने सवनेवने । वनेनापि महादेवं पूजयन्त्यत्र साधवः ॥ ५४ ॥
शिवलिङ्गं प्रयत्नेन वनेन वनजैरपि । वने सम्पूजयन्मर्त्यस्सवने सुखमाप्नुयात् ॥ ५५ ॥
एवं चार्तस्वरः कोऽयं तव किं तत्र कारणम् । इदं वद विशेषेण मह्यमित्याह तं यमः ॥

कुमारः—

ततः परमुवाचेदं वचनं तं यमं प्रति।

मुनिः—

मया पापरतो दृष्टस्तेनार्तिरभवन्मम । शिवनिन्दा कृता तेन तन्मुखं दुर्मुखं खलु
तद्दर्शनेन पापानि मयि जातानि कोटिशः । तदालोकनपापानि वृद्धिं यान्ति क्षणे
अतः कथं विनाशस्स्यात्तेषामिति विचिन्त्यते । दैवात्त्वयाप्ययत्नेन स दृष्टः पाप
मया स एव दृष्टोऽतस्तेन दुःखं प्रजायते। एतद्विनाशको धर्मो धर्मरूपेण किं त्वया

न ज्ञातस्त्वं वद प्रीत्या विचार्यादरपूर्वकम् ।। ६१ ।।

कुमारः—

इति तद्वचनं श्रुत्वा यमोऽपि नियमान्वितः। शुकाश्रमं ययौ तेन मुनिना सह सत्व
तं शुकं मुनिशार्दूलं कालकालार्चने रतम्। प्रणम्य दण्डवद्भूमावुवाच वचनं यमः

यमः—

दृष्टः कश्चिन्मया दुष्टो दुरदृष्टेन दूरतः। स शैवनिन्दकस्तेन पातकं तावदार्जितम्।
तद्दुष्टालोकनादेव मयाप्यघमुपार्जितम्। को वा तन्नाशकोपायस्तन्मे वद शिवार्च

शुकः—

ततस्सोऽपि शुकः प्राह दृष्टो यस्तु मया यम। त्वया दृष्टस्सुदुष्टोऽपि यतस्स शिवनि
कृतं यद्यपि तेनात्र तपो घोरतरं परम्। तथाप्यशाङ्करोजातस्तद्दृष्टं तथा विधम्।
किं घोरतपसा कृत्यं किमन्यैर्धर्मसञ्चयैः। शिवलिङ्गार्चने नित्यं विश्वासो यदि न
अपारपुण्यनिधयो येन पुण्यैस्समार्जिताः। तस्यैव तावद्विश्वासश्शिवलिङ्गार्चने
कल्पावसानपर्यन्तं धर्मैश्चेद्दिनयापनम्। तदा कथञ्चिद्विश्वासो जायते शङ्करार्चने।
सुलभं पुण्यपुञ्जानां श्रीमृत्युञ्जयपूजनम्। अन्येषां दुर्लभं तावत्तदेव शिवपूजन
सुमेरुशिखरस्थानां चन्द्रेण सह संस्थितिः। पातालवासिनां सा तु दुर्लभा तत्तथ
अतश्शिवाराधनेऽपि विघ्नास्सम्भावितास्ततः। तत्कार्यमप्रमादेन प्रमादे कुगति
अशाङ्करागारनारीनरनीरावलोकने। निमील्यलोचने पश्चात्कुर्यात्सूर्यावलोकन
अशाङ्करशरीराणि दृष्ट्वा नारकिणामपि। दृष्ट्वा भानुं विशिष्टश्चेद्दूरं यात्यपि धावति
शिवनेत्रत्वबुद्ध्यैव कर्तव्यं भानुदर्शनम्। अन्यथा धीर्यदि भवेत्तदा नरकमश्नुते

ततः परं भस्मनाङ्गं सम्यगुद्धूल्य सादरम्। हरलिङ्गार्चनं कार्यं कृत्वा मुक्तो भवेदघैः॥
उद्धूलितं भस्मनाङ्गं नवमेवोपजायते। भस्म पापशरीराणां भस्मीकरणसाधनम् ॥ ७८॥
तत्पुण्यपरिपाकेन भस्माङ्गमुपयात्यपि। तस्मादुद्धूलनेनान्यन्नवाङ्गमुपजायते ॥ ७९ ॥
प्रविष्टा रोमकूपेषु शरीरस्थेषु कीटिशः। लिङ्गानि जनयत्येव तदङ्गैर्भूतिरुत्तमा॥ ८० ॥
मन्ये लिङ्गमयं कायं विभूत्युद्धूलनाद्यम। तदङ्गं चरलिङ्गं स्यादुत्तुङ्गं चेतनाश्रयम्॥
अचेतनानि लिङ्गानि काश्मीरादीनि कोटिशः। सन्ति तत्पूजने तावन्नतावत्फलमश्नुते
प्रत्यक्षेण विरूपाक्षश्शाम्भवागारमाश्रितः। गृह्णाति फलमन्नं वा नीरं वा पुष्पमेव वा ॥
लिङ्गार्चनस्य महिमा तस्य लिङ्गार्चनस्य वा। वेदः कथञ्चिज्जानाति न विजानातिवायम
शाङ्कराग्रेसरस्याङ्गं विभूतिपरिवेष्टितम् । दृष्ट्वा भूतपतिस्तावन्नृत्यत्यम्बिकया सह ॥
अभूतपूर्वमेवेदं चरलिङ्गमिति श्रुतम्। शैवाङ्गमुत्तमाङ्गं तु तस्य तल्लिङ्गमुत्तमम् ॥ ८६ ॥
बाहुद्वयप्रसारेण लिङ्गाकारतया परम्। उत्तमाङ्गं दृश्यमानं तस्य लिङ्गमिति स्मृतम् ॥
अर्पितं चरलिङ्गेषु साक्षाद्भुंक्ते महेश्वरः। ततस्स्थावरलिङ्गेषु न तथा शिवसन्निधिः॥
रत्नलिङ्गं श्रुतिप्रोक्तं रत्नं शाम्भवपुङ्गवः। अतस्तदात्मकं लिङ्गं लिङ्गोत्तममितिश्रुतम् ॥
यस्य शाम्भवलिङ्गेषु न भक्तिरुपजायते। तेन स्थावरलिङ्गस्य पूजा कार्या प्रयत्नतः॥
स्थावरस्यापि लिङ्गस्य पूजां कृत्वापि सादरम्। तदर्पितोपहारेण कर्तव्यं हारतोषणम्॥
भुंक्ते हारमुखं प्राप्य सादरो हर इत्यपि। श्रुतिश्रुता ततो हारं हारा हारोदरं विदुः ॥
हारमाहारमासाद्य हारोऽपि हरतामियात्। ततो हारो हरस्साक्षात्तदाहारोदरं च सः ॥
येषां न हाररूपेषु लिङ्गेषु च दृढा मतिः। तैरर्चनीयं तल्लिङ्गं स्थावरं गिरिगह्वरे ॥९४॥
हारान्तःकरणाकारगुहामाश्रित्य शङ्करः। तिष्ठतीत्यवगन्तव्यं सा गुहा वेदबोधिता॥
तस्यां गुहायां संविष्टमम्बिकारमणंप्रभुम्। स्मृत्वाहर्षाश्रुधाराभिर्धीरोहारोऽमृतोभवेत्॥
यथाधिकारं लिङ्गार्चां कृत्वा पापैः प्रमुच्यते। यथा विभवमेतस्य पूजा कार्या विशेषतः ॥
शिव एव यदा दृष्टश्चिदानन्दघनस्तदा। तदर्चनरतो भूयान्न लिङ्गार्चनतत्परः॥ ९८ ॥
शिवसन्निधिरित्येव लिङ्गे पूजा विधीयते। स चेत्सन्निहितस्साक्षात्कार्यं तस्यैव पूजनम्॥
अतः प्रकृतपापस्य नाशायापि प्रयत्नतः। शिवलिङ्गार्चनं कार्यं तन्नाशस्तेन जायते॥

---

१. तदन्तेभूतिस्त्रुत्तमामिति पाठः।　　२. धीरो हारो द्रुतो भवेत् इति पाठः।

पापदावानलस्यायं शिवलिङ्गार्चनाम्बुदः । विनाशको भवत्येव सभाग्यानां भवेत्
अतः परं कालकालपूजया कालयापनम् । कर्तव्यं काल निलयं कालकालं स्मरन्
कुमारः—
इत्युक्त तद्वचश्श्रुत्वा तत्कृतं लिङ्गपूजनम् । तत्साधनानि दृष्ट्वापि यमः प्राह शुकं
यमः—
धन्योऽसि भाग्यवान्लोके भवानेकश्शुकाधुना । सर्वलोकोपकाराय शिवपूजा तवे
शिवपूजा साधनानां साधनं तपसां फलम्। एतावतैव तपसा सर्वेषां कृतकृत्यता।। १
त्वया जन्मार्जितानन्ततपोरूपेण केवलम् । लिङ्गार्चनं कृतमिदं सर्वसाधनसिद्धि
लोचनानां फलमिदं शिवलिङ्गविलोकनम् । अर्चितस्यास्य लिङ्गस्य दर्शनन्तु वि
शिवाराधनसामग्री दृष्टा सेयं मुहुर्मुहुः । तनोति परमानन्दं सेयमत्यद्भुता खलु।। १
न शिवार्चनसामग्री प्रभावस्यापि वर्णनम् । अपाररसनाभिर्वा शक्यते कर्तुमेकदा।
कल्पिता रचना सेयं त्वया शङ्करमन्दिरे। अपारतपसामेषा रचना फलमुच्यते।।१
जन्म ते सफलं माता धन्या धन्यः पिता तव । शाम्भवस्य त्वया सङ्गाद्धन्यं मामपि
भुवनेषु न कुत्रापि दृष्टश्शाम्भवपुङ्गवः । एतादृशश्शिवरतो दुर्लभः खलु सर्वदा।।१
धन्यं नेत्रयुगं धन्यंधन्यंधन्यं करद्वयम् । शिवपूजनसामग्रीकरणालोकनादरात् ।।
एतादृश महादेव पूजया परयानया । फलं शाङ्करपादाब्जमकरन्दयता मता ।।
कुमारः—
इत्युक्त्वा शङ्करं नत्वा स पुनःपुनरादरात् । शुकं नत्वा ययौ कालश्चित्रगुप्तसमन्वि
यमस्स्वनिलयं गत्वा दूतानाहूय तांस्ततः । शैवनिष्ठुरवक्तारं ताडयन्त्विति चाब्र
यमः—
तस्य तु क्षणमात्रं वा नरकान्मास्तु निष्कृतिः । घोरेषु नरकेष्वेव स नित्यमधितिष्ठ
स पापिष्ठः पाचनीयो भर्जनीयो निरन्तरम् । ताडनीयः कशाघातैरग्निकल्पैर्मुहुर्मुहुः
कुमारः—
इत्याज्ञाप्य यमस्स्वच्छश्चित्रगुप्तेन संयुतः । लिङ्गार्चनोत्सवं स्मृत्वा शुकस्यातीव वि

भुवि खलु शिवलिङ्गाराधका एव धन्या निजहितधनधान्यैश्शङ्करं पूजयन्तः।
शिवजनपरिवीताश्शर्ववार्ताप्रवृत्तिप्रकटितनिजपुण्याः पुण्यपूर्णार्णवास्ते ॥ १२०॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे यमशुकसंवादो नाम सप्तदशोऽध्यायः ॥ १७॥

---

भृंगिगौरीसंवादो नाम अष्टादशोऽध्यायः.

कुमारः—

अतश्शङ्करभक्तेषु न युक्तं निष्ठुरं वचः। सदा स्नेहेन वक्तव्यं विनीतेन शनैश्शनैः ॥
अतस्त्वयापि गत्वाग्रे नन्दिकेश्वर सादरम्। वक्तव्यं तेन सहसा मधुरा वागनुत्तमा ॥

व्यासः—

इत्युक्तः प्रेषितस्तेन ययौ सत्वरमादरात्। रत्नपुष्पकमारुह्य गणकोटिसमावृतः ॥ ३ ॥
ततो दूरं नन्दिकेशं भृङ्गी दृष्ट्वा प्रहृष्टधीः। प्रणम्य परया भक्त्या पप्रच्छ कुशलं ततः ॥

भृङ्गी—

अनन्तब्रह्मकल्पान्ताः प्रवृत्तास्सुयशापते। तथापि त्वरया तावन्नाभूद्गमनमादरात् ॥५॥
शङ्कराज्ञानुसारेण वर्तनं खलु दुर्लभम्। न शङ्कराज्ञा भवतां विलम्बकरणाय सा ॥६॥
नारायणास्समुत्पन्नाः कोटिशः पद्मजादयः। तथापि भवतां तावत्तत्कालकलनापि न ॥
कालकालकृपा तावादधुनाप्यनुवर्तते। भवत्येवं कृता पूजा भवद्भिश्शङ्करस्य तु ॥ ८ ॥
आराधितस्सावधानं गिरिराजसुताधवः। अतो न कालकालस्य कोपलेशो भवत्स्वपि॥
प्रभुः कार्यार्थमुद्युक्तो विलम्बे किं करिष्यति। उग्रोऽप्यनुग्रो भगवान्भक्तेष्वेवमनुग्रहात्
अनुग्रहेऽपि विज्ञातेऽप्येवं कार्यविलम्बनम्। नोचितं भृत्यकृत्यानि न विलम्बसहान्यपि
मृत्युञ्जयत्वात्तत्कार्येविलम्बोऽपि न नः क्षतिः। मृत्युञ्जयस्यकृत्यंचनमृत्युमुपयास्यति

व्यासः—

इति तद्वचनं श्रुत्वा नन्दिकेशः प्रहृष्टधीः। त्वया साधूक्तमित्युक्त्वा ददावालिङ्गनं पुनः॥
ततः परं स तरसा कुमारनिकटं ययौ। कुमारेण प्रेषितोऽहमित्युदीर्य शिवं स्मरन् ॥१४
विमानादवतीर्याथ नन्दी भृङ्गिसमन्वितः। ननाम दण्डवद्भक्या तमुवाच च षण्मुखः ॥

स्कन्दः—

देवतासार्वभौमस्य महादेवस्य सेवकाः । यूयं कृतार्थाः पुण्यानां सागरा एव केवल

किं करोति महादेवस्तस्मिन्सिंहासने नवे । प्रवृद्धमाने वसति किं वा रत्नप्रभालये॥

किमेकरत्नभवने योजनार्बुदमुन्नते । किं नीलरत्नसदने योजनायुतमुन्नते ।। १८ ॥

हीरागारेऽथ रुचिरे लक्षयोजनमुन्नते । स मुक्ताफलसौधे वा गिरिराजसुताधवः ॥१

किं पद्मरागभवने नानारत्नविचित्रिते । यद्वा गोमेधकागारे शङ्खयोजनमुन्नते ॥ २०

पुष्परागस्य सदने यद्वा मारकते गृहे । शङ्खलक्षोन्नते यद्वा शिवोऽन्यत्राधितिष्ठति ॥

मरन्दकुल्यानिकटे यानि लिङ्गानि कोटिशः । पूजितानिविचित्राणितेषुक्रीडतिकिं

यद्वा क्रीडति विश्वात्मा चन्द्रमण्डलमण्टपे । विद्युद्दामसमाकीर्णे ताराराजिविराजिते

मन्दारकुसुमासारमण्टपेषु चरत्युत । तुङ्गभृङ्गाङ्गनानाट्यं पश्यन् गौरीमनुस्मरन्

यद्वा कुसुमसौधेषु तत्प्रासादेषु वा शिवः । यद्वा साधुसुधाकुल्यातीरे चरति शङ्करः॥

व्यासः—

इति तद्वचनं श्रुत्वा भृङ्गी विनयसंयुतः । उवाच मधुरां वाणीं वाणीं वाणीशदुर्लभाम्

भृङ्गी—

मन्दारपुष्पशयनैरनन्तैरपि संवृते । अत्युच्चकुसुमासारप्रासादेषु हरस्स्थितः ॥ २७

तत्र स्थितस्त्वा समाहूय मामादरपुरस्सरम् । प्रेषयामास भगवान्कुमार तव सन्निधिम्॥

धन्योऽस्मि त्वत्पदाम्भोजं दृष्टमद्य यतोऽधुना । अतः परं प्रयाणाय कुरु यत्नं विशे

महादेवपदाम्भोजविलोकनमहोत्सवः । सत्वरं भवतु स्वामिंस्तद्विलम्बे शुभं कथम्॥

व्यासः—

इति सम्भाषणैर्भृङ्गी कुमारमभिनन्दयन् । कुमारोक्तां शिवकथांशृण्वन्नादरतस्स्थि

अम्बा विजयया साकं जयया सेविता मुदा । प्राह स्मेरमुखाम्भोजरुचिराचिरमाद

गौरी—

[1]हरस्मरारिस्स्मरतीति चित्रं स्वतस्सुखासारसमावृतोऽपि ।
अपारमानन्दमपि प्रयच्छन्नान्दोलयन्[2]मन्दमिव प्रभुर्मे ।। ३३ ।।

१. हरस्सरत्येतदतीवचित्रं इति पाठः ।
२. मन्दमिवस्तनौमे इति पाठः ।

व्यासः—

ी हारविहारोरुविलासालसतां कदा । प्रयास्यतीति विजया हराकारं जगौ मुहुः ॥

विजया—

त्वामेव सततं चिन्तयित्वा पुनःपुनः । त्वन्मूर्तिमात्रध्यानेनकालंनयतिशङ्करः

दराण्यरविन्दानिसौवर्णानिविलोकयन्। करोतिनिन्दामेतेषांसौन्दर्यंधिग्धिगित्यपि

गौरीमुखाम्भोजेसौन्दर्यमतिशोभनम् । तत्कोटयंशोऽपिनात्रेतिसृष्टिर्व्यर्थेतिमन्यते॥

सम्पूर्णशरद्राकासुधाकरविलोकनम् । न चकार कलङ्कीति मत्वा स्मृत्वा त्वदाननम्

ददर्श महादेवश्शफरीपरिवर्तनम् । त्वन्नेत्रसम्भ्रमं स्मृत्वा नीलिमानं विचिन्तयन् ॥

मला विद्रुमलता पद्मरागप्रभान्विता। निन्दिता तेन ते गौरि सुन्दराधरचिन्तनात्॥

ं तिलप्रसूनं वा तेन नालोकितं शिवे । नासापुटतटं स्मृत्वा शिवेनादरपूर्वकम् ॥

इनीलालिमालापि तेन नालोकिता शिवे । रुचिरंचिकुरंस्मृत्वाधंमिल्लमपिशोभनम्

रुगिरिकल्पाश्च गिरयस्तेन नेक्षिताः । त्वत्कुचस्मरणेनैव त्वत्सौन्दर्यविनिन्दया ॥

न्दावर्तवार्तापि न कृता तेन शैलजे । गम्भीरनाभिस्मरणात्कदापि गिरिकन्यके ॥

मरम्भास्तम्भानां सौन्दर्यमपि वीक्षितम् । त्वदूरुभागसौन्दर्यस्मरणेन प्रतिक्षणम्

कोकनदसौन्दर्यं दृष्टं तेन शिवप्रिये । पादारविन्दस्मरणे महादेवेन ते मुहुः ॥४६॥

कृतं तेन गिरिजे तारहारावलोकनम् । त्वदुरोजातिरुचिरहारानुस्मरणे सति॥४७॥

न्दपानां दूरेण स्थितिमिच्छति शङ्करः । पिकालापांश्चहुंकारान्नशृणोतिविनिन्दति

म्लानपुष्पशय्यानां नकरोतिविलोकनम्। नास्वादितोरसस्तेनसुधायास्सर्वथाम्बिके

मत्तराजहंसानां गमनं स विनिन्दति । वरटानां सगर्भाणां स्मृत्वात्वत्पदचालनम्॥

र्यंस्मृत्वातवाम्बाघ्रसिह्ममध्यविनिन्दनम्।अणूनांपरिमाणस्यनिन्दामपिचकारसः

रुसानुसौन्दर्यनिन्दकोऽपि स धूर्जटिः । स्मृत्वा कटितटं तिष्ठत्यम्ब तेनविडम्बना

नीहारतल्पमधितिष्ठति चन्द्रमौलिर्मारज्वरानलविदाहविनाशनाय ।

तत्सङ्गमेन गिरिजे तदभूदसह्यदावानलप्रतिममप्रतिमं भवानि ॥५३॥

कुन्दोच्चयेषु शयनं न चकार गौरि मन्दारपुष्पनिवहेष्वपि कालकालः ।

दूरीकरोति विधुमण्डलचारुशय्यां चण्डांशुमण्डलधिया गिरिजे धवस्ते॥५४॥

उत्कण्ठयापि यदकुण्ठितनीलकण्ठनाट्यावलोकनमशेषविशेषचिन्ता
कुर्वन् गिरीन्द्रतनये न चकारधीरो माराररिद्य तु विशेषत एव नून
कर्पूरगौरमभवद्गिरिजे शरीरं किं शङ्करस्य रुचिरं न सुमेरुचारु।
कार्श्यञ्च तावदधुना तनुरेति शम्भोस्सा किं तनुर्न भवतीति न मा
ये कल्पिताः परिमिता अपि लीलयाद्य लीलाविहारनिलयाःकमल
दूरीकृताश्च तरसा विनयं प्रपन्नाः किं शैलराजतनये वदति त्रिणेत्रः
मन्दारसुन्दरमरन्दविनोदसौधभृङ्गाङ्गनाङ्गमपि शङ्करविलोकनार्हम्।
अङ्गारकल्पमभवद्गिरिराजकन्ये धन्ये तवैव विरहेण महेश्वरस्य ॥
नारीविशेषरचनाचतुरश्चिरं ते स्मृत्वा शरीरमगराजसुतेऽमरेशः।
दूरीकरोति रचनां तरसा चकोरः काञ्चीमिव प्रतिदिनं स्मृतचारुच
पूर्वं विधाय विधुमण्डलमण्टपानि गौरीविनोदमदवर्द्धनसाधनानि।
तानीति तेन गिरिजाविरहे वृथेति दूरीकृतानि गिरिशेन गिरीशक
यद्यन्मनोहरतरं गिरिशेन सृष्टं तत्सर्वमद्य गिरिजागमनं विना मे।
कृत्यं न दृष्टमिति तुष्टतमत्वशङ्कां कृत्वा स तिष्ठति सुनिष्ठुरसृष्टिबुद्ध
अद्यापि शङ्करविहारविचारलेशः किं ते गिरीशतनये कमनीयमूर्तिः
किं न स्मृतश्श्रवणमङ्गलपुण्यकीर्तिर्भाग्यप्रदानविनिवारितपातकार्तिः
यत्पादुकास्मरणमात्रममङ्गलानि दूरीकरोति शतधापि सहस्रधापि।
पश्चात्तनोति विविधान्यपि मङ्गलानि तत्पादुकास्मरणमाशु शुभावह
धन्यासि देवि गिरिजे गिरिशप्रसादसन्दोह पात्रमपि चित्रमिदं तवे
गात्रं पवित्रमिदमत्र कथं त्रिणेत्रसेवाख्यसत्रवरदीक्षितमस्तुशास्त्रम् ॥
कल्याणरूपसुगुणार्णवमिन्दुमौलिं तूर्णं विलोकय परात्परमन्नपूर्णे।
अभ्यर्णमेत्य वरवर्णिनि वर्णनीयं सम्पूर्णकाममपराजितमेहि भद्रे ॥
अङ्गश्रिया कनकचम्पककान्तिधारा दूरीकृता तव तया फलमस्ति
यद्यद्य शङ्करविहारवरानुकूला नस्यात्तदा गिरिसुते विफला न किं
राकासुधाकरमनोहरबिम्बमम्बे तन्निन्दनं वदनमद्य करोति ते वै।

किं तेन वा फलमनुक्षणमिन्दुमौलिलीलाविनोदमधुरस्मितवर्जितं चेत् ॥ ६७ ॥
नीलोत्पलामलविशालदलश्रियापि दूरीकृतं तव विलोचनधामधारा ।
दृष्टेत्यदृष्टपरिपाकविचिन्तनेन तद्गौरि शङ्करविनोदमुदे कदा स्यात् ॥ ६८ ॥
नीलाचलालिकुलकान्तिविशेषपूरं दूरीकरोति चिकुरप्रचुरप्रभा ते ।
एषा त्रिलोचनविलोचनगोचरा चेद्गौरि प्रमोदजननी जननि स्वतस्स्यात् ॥
धीरे सुमेरुशिखरातिमनोहरश्रीर्दूरं प्रयाति विपुलं कुचमण्डलं ते ।
दृष्ट्वा तदेतदधुना गिरिजे गिरीशदृष्टं प्रकृष्टमतिपुष्टिमुपैति हृष्टम् ॥ ७० ॥
रोमावली त्रिवलिसंवलिता तनोति कामध्वजश्रियमिमं गिरिजे पिधेहि ।
एषा स्मृतापि मदनज्वरभूरिधारां सम्पादयिष्यति चिराय हराय धाराम् ॥
त्वत्पादपद्ममतिसुन्दरविद्रुमाद्रिमुद्राद्रवं श्रियमिदं न तिरस्करोति ।
तुच्छस्य तस्य न तिरस्क्रियया फलं स्यादित्यम्बशम्बरहरारिमनोहरं ते ॥
संपूर्णदौहृदमदान्धमरालकान्तामत्तेभदारगमनानि तिरस्करोति ।
त्वत्पादपद्मचलनं नवचन्द्रमौलिलीलारसास्पदमिदं न मुदं तनोति ॥ ७३ ॥
अम्बाधुना घनमिदं जघनं तवेदं नूनं नदीषु पुलिनं मलिनं करोति ।
उत्तप्तकाञ्चनविशेषितकाञ्चिकाङ्कं किं जातमस्य क्रिमियं न तु रक्षणाय ॥
आवर्तवृत्तिरपि या सरितां सदा सा त्वन्नाभिदेशसुषुमाश्रवणेन लज्जा ।
किं नाम्बुमज्जनविलीनकुलाकुलानां हानिः प्रवृद्धसकलानवलोकनेन ॥ ७५ ॥

किं गौरी विषमेक्षणं क्षणमपि ज्ञात्वैव नायाति मां
यद्वा सातिविशालफालविपुलज्वालानलव्याकुलम् ।
यद्वा सन्निहितं त्रिशूलमथवा मां कालकूटाशनं
गौरं मामुरुसर्पसर्पवलयं पञ्चास्त्रसंहारकम् ॥ ७६ ॥

समा दृष्टिस्तस्याः कुटिलचटलालोलनलवा-
द्भवित्री फालाग्निं विषमपि सशूलं हरति किम् ।

---

१. हराय मार्या इति पाठः ।

न सव्यालं बाला मदनशरमालातिविमला
विशाला नीलाम्बा किमिति न मुदा पश्यति मुहुः ॥ ७७ ॥
अम्बा शम्बरवैरिवैरिरुचिरव्याहारसारादरा
धीराप्यस्त्रविकारसारसरसासारापहारैरलम् ।
सा रेजे विकलंकसुन्दरशरद्राकानिशानायका-
लोकालोकनशोकनाशनकरं सस्मार हारं चिरम् ॥ ७८ ॥
लीलाकल्पितकल्पभूरुहवरापारान्तरालस्फुर-
द्रत्नाकारसुमेरुधीररुचिराकारप्रकारा करे ।
धीरे मारशरातिसुन्दरसरस्तीरे विहारं चिरं
वारं वारमलं विहारमकरं गौरि स्मरारेः परम् ॥ ७९ ॥
सौन्दर्यामरवाहिनीतरलिमा भूमा भवानीति या
प्रेमा सोमकलावतंसमहिमा स्थेमा सुसंवर्द्धताम् ।
तस्यैव प्रथिमा तथैव लघिमा तस्यास्त्वयं द्राघिमा
तस्यायं महिमा तथा मधुरिमा सीमान्वितं तेजसः ॥ ८० ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे भृंगिगौरीसंवादो नाम
अष्टादशोऽध्यायः ॥ १८ ॥

---

तण्ड्यागमनं नाम एकोनविंशोऽध्यायः.

व्यासः—

इति तां विजयावाणीं साक्षाद्वाणीमिव स्थिताम् । शुश्राव श्रवणानन्दधारामिव
ततः परं दुकूलानि सृष्टानि गिरिशेन सा । प्रकृष्टानि विलोक्याम्बाचन्द्रबिम्बा
परिधाय ततो धीरा वसनानि सवासनम् । शनैर्विलोक्य वसनं कमनीयतरं शिवा
धम्मिल्लस्य परिष्कारं सीमन्तस्यापि सा नखैः। चकार गौरी त्वरयारत्नाभरण
ततः परं विचित्रेषु रत्नपात्रेषु कोटिशः । पक्वान्नानि निधायाम्बा बुभुजे ससुता
ततस्ताम्बूलमादाय जयया विजयापि च । दत्तं भवानी जगृहे चिरमानन्दवाहि

हरोपहारशेषान्नं प्रेषयामास शैलजा । गणेभ्यस्ते गणाधीशास्तुष्टाः पुष्टाः परस्परम् ॥
देवदुन्दुभयो नेदुस्तूर्यध्वजविजृम्भिताः । शङ्खदुन्दुभिनिर्घोषैर्व्याप्तं शङ्करमन्दिरम् ॥
अपूर्वदुन्दुभिध्वानं ध्यानारूढोऽपि शङ्करः । दिव्याभरणसङ्कीर्णस्फुटकर्णपुटैः पपौ ॥
ततः कोऽयमपूर्वोऽत्र दुन्दुभिध्वनिरित्यपि । मृडस्तण्डिं समाहूय त्वाढमूचे वचस्तदा ॥

ईश्वरः—

कोऽयं डिण्डीरवस्तण्डे मण्डनं कर्णमण्डले । गौरी प्रायस्समायाति न वा तत्वं विचारय

व्यासः—

इत्युक्तो दण्डवद्भूमौ तण्डी नत्वा हरं ततः । विमानरत्नमारुह्य स ययौ त्वरया द्विजाः ॥
तद्विमानं तदा गौरी दूराल्लोचनगोचरम् । चकार तरसा वीरा किमेतदिति विस्मिता ॥
अत्यद्भुतं विलोक्याम्बा तद्विमानं मनोहरम् । सादरं हारमित्येव हृष्टा पुष्टा प्रकृष्टधीः ॥
ततः कुमारमाहूय कस्येदं पुष्पकं शिशो । इदं हारमुदारं किं तरसा तद्विचारय ॥ १५॥
ततः कुमारस्तं दृष्ट्वा हारध्वजविवर्जितम्। नहारं हरसम्बन्धीत्युवाच वचनं च सः॥१६॥
ततो बहिर्गतस्स्कन्दस्तद्विचाराय सादरम् । ततस्सत्वरमेवात्र स तडीसमुपागतः॥ १७॥
स नत्वा दण्डवद्भक्त्याकुमारंनतकन्धरः । विलम्बोनाम्बिकाकान्तहितायेत्यब्रवीन्मुहुः
ततः कुमारस्त्वरया गौरीचरणपङ्कजम् । नत्वा हिमाचलसुते त्वरयेत्यब्रवीन्मुदा ॥

कुमारः—

अयं तण्डी प्रचण्डोऽसावुद्दण्डगणपाश्रयः। तद्दोर्दण्डवलेनैव भ्रान्तं भूमण्डलं पुरा॥२०॥
त्वरया प्रेषितस्सोऽपि शङ्करेण समागतः । अतः परमवस्थानमत्राप्यनुचितं शिवे ॥
विमानं रत्नसन्नद्धं तव तद्धि मनोहरम् । तदारोहणमात्रेणाप्यानन्दो वृद्धिमेष्यति ॥

व्यासः—

इति तद्वचनं श्रुत्वा विमानरचनां शिवा । दृष्ट्वा प्रहृष्टा सजया तया विजययासह ॥ २३॥
तदारुह्य ततो गौरी विमानमतिशोभनम् । नाट्याङ्गनार्बुदयुता गानं शुश्रावतत्कृतम् ॥
ततः कुमारे चलति ते वनेन गणैस्सह । दुन्दुभिध्वनिसम्पूर्णं पुनश्शङ्करमन्दिरम् ॥
परार्धयोजनायामे यानेस्थित्वागिरीन्द्रजा । पुनर्विस्मयमापन्नाप्यापन्नार्तिविनाशिनी
विद्युल्लतासमातानि वेत्राण्यत्युत्तमान्यपि । अपाराणिददर्शाम्बागणहस्तस्थितानिसा॥

बभूव कुसुमासारो मन्दमारुतसंयुतः । सुगन्धपुष्परजसामासारोऽपि ततः परम् ॥
सा पुष्पमण्टपच्छाया प्रच्छन्ने पुष्पके स्थिता। रराज गौरी राजीवराजिराजिविराजि
पुष्पप्रासादशृङ्गाणि पश्यन्ती सा पुनः पुनः । नाट्यङ्गनानतपदा मन्दंमन्दंययौगि
मन्दमारुतपोतेन केतकीसंयुतेन सा । सेविता सा सुतौ दृष्ट्वा सस्मेरापि पुनः पुनः
उत्फुल्लकमलाक्रान्तसरांसि विपुलानि च । रत्नसोपानकल्लोलसङ्कुलानि ददर्श सा
तत्रापूर्वं मरालानां वरटानां च कोटयः । दृष्ट्वा प्रहृष्टा पुष्टाङ्गी शिपिविष्टप्रिया पर
शुकान्पिकांश्चकोरांश्च भ्रमरानपि कोटिशः । सुस्वरान्पुष्पमालासु निविडासु मनोहरान्
रुद्रवीणासहस्राणि दृष्ट्वा सा प्रतिमण्टपे । स्वतस्स्वनयुतानम्बा विस्मयं परमं ययौ ॥
सुधाप्रपासु विश्रान्ता पश्यन्ती पुष्पमन्दिरम् । पदेपदे प्रकृष्टानि फलान्यास्वाद्यसाय
तटित्कोटिकुटीराणि ददर्श गिरिजा ततः । प्रतिक्षणं पुष्पवृष्टिं दृष्ट्वा हृष्टा च नूतना
तां तद्विलोकनानन्दधारामन्दंगतिं शिवाम् । दृष्ट्वा तुष्टाव तुष्टात्मा तदा गणगणोमुदा॥

गणगणः—

जयाम्ब जय शर्वाणि जय गौरी शिवप्रिये । जयान्नपूर्णे विमले कालकालप्रियेऽनघे॥
जय शैलसुते देवि कमलामललोचने । जयामराङ्गनाराध्ये जय कल्याणि शाम्भवि॥
जय मङ्गलसर्वाङ्गे मङ्गले सर्वमङ्गले । जय मृत्युञ्जयार्धाङ्गतुङ्गसिंहासनाश्रये ॥ ४१॥
जयभक्तजनानन्दप्रदाननियतव्रते । जय दुर्गे विशालाक्षि जय त्रिपुरभैरवि ॥ ४२ ॥
जय वागीश्वरि प्राज्ञे मङ्गलागौरि चण्डिके । चित्रघण्टे जयानङ्गविजयध्वजमालिके॥
जयश्रीविलसद्गौरि सिद्धेश्वरि नमोऽस्तुते । नमस्ते सङ्कटागौरि शीतलागौरि ते नमः
वन्दीदेवि नमस्तुभ्यं ललिते विश्वबाहुके । छन्दलाम्बनमस्तुभ्यंनमस्तेभ्रमराम्बिके॥

ज्ञानप्रसूनाम्ब नमो नमस्ते नमो नमस्ते शिवकामसुन्दरि ।
नमो नमस्तेऽस्त्वरुणाचलेश्वरि नमो महागौरि नमो नमस्ते ॥ ४६ ॥
नमो नमः कल्पलताप्रसूनमालासमाक्रान्तपदे नमस्ते ।
वन्दे स्वभक्तेप्सितदानलोले विलासशीले गिरिजे नमस्ते ॥ ४७ ॥
नमोनमस्त्वच्चरणारविन्दमरन्दधाराप्रसरोऽस्तु मूर्ध्नि ।
अस्माकमीशानदया यथा स्यात्तथा विधेयं गमनोत्तरं वा ॥ ४८ ॥

नस्त्वापराधेन कृतो विलम्बस्तमम्ब संवेदय शङ्कराय ।
कृतापराधानपि बालपुत्रानम्बा न सा कुप्यति सर्वथापि ॥ ४९ ॥
अस्माकमन्यच्छरणं किमस्ति विहाय तावच्चरणं तवाम्ब ।
शिवस्य वा तावदुमे ततोऽस्मानवावनं भक्तजनस्य कार्यम् ॥ ५० ॥
अस्माकमप्यन्तकवैरिधीरद्वाराश्रयाणां न भयं कुतोऽपि ।
दया विधेया खलु तावताम्ब त्वत्पादपद्मार्चनतत्पराणाम् ॥ ५१ ॥
विहारकालेषु कदाचिदम्ब साम्बाय तावद्विनिवेदनीयाः ।
वयं यथा साधु सुखं प्रपन्नाश्शिवप्रसादेन भवत्प्रसादात् ॥ ५२ ॥
सा त्वं शिवार्धाङ्गमुमे दया चेदस्मासु तावत्तव तावतापि ।
न दुःखलेशोऽपि ततः प्रसन्ने प्रसन्नचित्तान्कुरु सर्वदा नः ॥ ५३ ॥
विज्ञापनेयं हृदि सावधानमानन्ददानप्रवणेन तवास्तु ।
एतावतास्माकमुमासहायस्सहायतामेति न संशयोऽत्र ॥ ५४ ॥

व्यासः—

एवं सा गणनायकोक्तवचनान्युच्चैस्समाकर्ण्य सा
भूयस्तद्वचनानि सङ्कटपदोपेतान्यनन्तान्यपि ।
श्रुत्वा हृष्टमतिप्रकृष्टहृदया नत्वा पुनश्शङ्कर-
ध्यानानन्दरसप्रभूतविलसद्रोमाञ्चकान्ता शिवा ॥ ५५ ॥
तत्रादूरमहेश्वरातिरुचिरागारोरुसिंहासना-
नन्ताश्रान्तसुकान्तसन्ततिसमाक्रान्ता नितान्तं शिवा ।
रेजे राजतशैलतुङ्गशिखराकारोरुरत्नासने-
ष्वासीनाप्यनुवेलमिन्दुशकलालङ्कारकान्ता बभौ ॥ ५६ ॥
दूरादम्बरशेखरान्तरविमानारूढगौरीस्फुर-
द्धेरापारतटिल्लतातिसुषुमापूरं विलोक्यादरात् ।
सा गौरी समुपागतेति स मुहुः पश्यन्पुनश्शङ्कर-
श्शङ्काशूकविवर्जितस्स्मरहरस्ससस्मार पूर्वां दशाम् ॥ ५७ ॥

ईश्वरः—

अद्यायास्यति शैलजा क्षणरुचिव्रातप्रतापं मुहु-
दूरीकृत्य शनैरितः परमियं प्रेम्णा समालिङ्ग्य माम् ।
आर्तिं सा परिहृत्य कृत्यशतमप्याशास्यमाशास्यतां
प्राप्ता पूरयितुं समर्थहृदया या सा दयासागरः ॥ ५८ ॥

गौरी चारुविहारसागरलसत्कल्लोलमालाकुलो
लीलाकल्पितदिव्यविग्रहयुतः पुष्पोच्चयेष्वप्यहम् ।
प्रासादेष्वपि पुष्पपुञ्जरचिताकारेषु पुष्पोल्लस-
च्छायाकोटिसमावृतेषु सुदृशाक्रान्तेषु नेयं दिनम् ॥ ५९ ॥

वातो वाति मनोहरप्रसवजो मन्दं सुधाशीकर-
व्यापारप्रचुरश्चिरेण रुचिरस्स्वैरं विहाराकरः ।
उत्फुल्लानि सरांसि सारसकुलालोलाम्बुवीचिप्रभा-
सम्बद्धानि शनैश्शनैस्सुकुसुमां शय्यां स्पृशन्त्सन्ततम् ॥ ६० ॥

गौरी चारु शरीरतः किमिति वा नायाति वातोऽधुना
कस्तूरीघनसारगन्धरुचिरव्यापारभारानपि ।
दूरीकृत्य निरन्तरश्रमकृतस्वेदाम्बुधारामपि
प्रासारप्रसवप्रसादविभवं सम्पादयन्त्सन्ततम् ॥ ६१ ॥

तद्धम्मिल्लविलोकनेन विलयस्स्यादप्यलीनामहो
तन्नीलाचलकान्तिसारमसकृद्दूरीकरोतीत्यपि ।
चन्द्रस्तावदितः प्रयास्यति शिवावक्त्रेन्दुसन्दर्शना-
द्यास्यन्त्येव विलोलसुन्दरदलाक्रान्तारविन्दान्यपि ॥ ६२ ॥

अत्युन्मत्तचकोरराजिरधुना दूरं प्रयास्यत्ययं
क्रीडारत्नगिरिः प्रयास्यति शिवावक्षोजसंवीक्षणात् ।
मीनास्सन्तु जलेषु सन्ततममी तन्नेत्रमीनप्रभा-
प्रादुर्भावविलोकनेन सकृदप्यत्यद्भुता सा शिवा ॥ ६३ ॥

यद्यद्यास्यति तत्प्रयातु न च मे तैरस्ति कार्यं यदा
गौरी लोचनगोचरा मम तदा साकं त्वया क्रीडने ।
ब्रह्माण्डप्रलया भवन्तु वहवः कल्पोऽपि तत्सङ्गमे
स्यादेव क्षणकल्प इत्यनुदिनं तत्सन्निधानं धनम् ॥ ६४ ॥
सृष्टिः केयमभूदपूर्वविभवा गौरीस्वरूपा पुरा
तत्तुल्यं न मया मितं वसुमणिश्रेष्ठं भवानी परम् ।
नारीरत्नमिति श्रुतं नयनयोरानन्ददानाय सा
ज्ञानानन्दघना सुधाघनघना ज्ञाता भवानी मया ॥ ६५ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे तण्ड्यागमनं नाम
एकोनविंशोऽध्यायः ॥ १९ ॥

---

## गौरीशिवमेलनं नाम विंशोऽध्यायः.

व्यासः—

इत्युदीर्य महादेवे सानन्दे सति सत्वरम् । विमानरत्नछायाभिस्स्वनाक्रान्तो महेश्वरः ॥
जयध्वनिश्श्रुतस्तेन तूर्यध्वनिरनन्तरम् । दुन्दुभिध्वनयः पश्चाच्छ्रुतास्तेन मनोहराः ॥
गौरीशरीरकान्तिश्च तटित्कूटनिभा तदा । दृष्टा तेन महेशेन पुष्टस्तेनाभवत्तदा ॥ ३ ॥
जयध्वनीनामभवद्यस्तु कोलाहलस्तदा । स सुधासन्निभो जातस्तदा श्रवणमङ्गलम् ॥
ततः परं शिवा दृष्टा सौन्दर्यनिधिरादरात् । महादेवेन तेनायं परमानन्दमाप्तवान् ॥

महादेवः—

यच्चिन्तितं फलं पूर्वं तत्प्राप्तमधुना मया । अतः परं न मे किञ्चिद्दुर्लभं वस्तु दृश्यते ॥

व्यासः—

नवनीतमिव प्राप्य वालकस्स तदा हरः । तुष्टः पुष्टः प्रहृष्टश्च दृष्ट्वा तां गिरिकन्यकाम्
अनन्नः परमान्नानि यथास्यं प्राप्य तुष्यति । तथा तुष्टो महादेवो दृष्ट्वागौरींमनोहराम्
अपुत्रः पुत्रमासाद्य यथा तुष्टोभवेत्तथा । तुष्टो गौरीं विलोक्याशु कृशोऽपि नसतांविना
माकन्दकन्दं सम्प्राप्य पिकः पुष्टो यथा तथा । गौरीं दृष्ट्वा महादेवस्तुष्टएवप्रतिक्षणम्
प्राज्यं राज्यं समासाद्य धनहीनो यथा नरः । तुष्टस्तथामहादेवोदृष्ट्वातुष्टोगिरीन्द्रजाम् ॥

ततः परं प्राप गिरीन्द्रकन्या धन्या पुरारातिपुरप्रकारम् ।
ततः परं हर्षमनोज्ञदृष्टिस्सपुष्पवृष्ट्या सह सम्बभूव ॥ १२ ॥
अपारतूर्यध्वनयः प्रवृत्तास्सुदुन्दुभिध्वानविधानयुक्ताः ।
सशङ्खनादाश्च सगाननादा जयध्वनीनामपि वृष्टिरासीत् ॥ १३ ॥
तदा नवं सृष्टमभूतपूर्वं समन्दिरं तन्नगरं शिवेन ।
जयप्रदं शोभनदं मनोज्ञं सर्वत्र सर्वोत्सवसागराढ्यम् ॥ १४ ॥
अनन्तनानाविधरत्नमालासुतोरणागारवरावृतानि ।
स्थलानि सर्वाणि चकार शम्भुर्लीलाविनोदेन दयानिधानः ॥ १५ ॥
रत्नद्वारविशेषकोटिशिखरद्वाराणि तीर्त्वा शनै-
गौरी रत्नविमानरत्ननिलया सन्तोषवर्षावृता ।
या नीराजनकोटिकूटघटिता नाट्यानि दृष्ट्वा मुहु-
स्तस्मादप्यवतीर्य शङ्करगृहद्वारे स्थिता सा क्षणम् ॥ १६ ॥
सा तस्मिन्त्समये शिवं हृदि मुहुस्स्मृत्वा पुनस्सस्मिता
धृत्वा सा विजयाकरं सुरुचिरा गौरी शिवालोकने ।
लज्जा नम्रमुखी विहारसदनं मन्दं मुदा प्राप सा
सानन्दा शिववीक्षिता मुहुरुमा धन्येति मान्येति च ॥ १७ ॥
सानन्दं मुहुरिन्दुमौलिवदनं स्मेराङ्कितं सस्मिता
दृष्ट्वा सन्निधिमेत्य शैलतनया तृप्ता न सा सर्वथा ।
तां दृष्ट्वा विजया ययौ च सजया गेहान्तरं सा ततो
गौरी शङ्करसुन्दराङ्गमगमद्विद्युल्लतेवाम्बुदम् ॥ १८ ॥
गाढालिङ्गनचुम्बनाधररसास्वादानुमोदाद्भुता-
नन्दाम्बोधितरङ्गसङ्गललितस्वस्वाङ्गरागस्थले ।
लीला काप्यभवद्द्वयानपुनरप्यङ्के भवेदूनता
तद्वारा सुधया प्रतिक्षणमभूदानन्दवृद्धिस्तयोः ॥ १९ ॥
कुन्दामन्दमरन्दमन्दिररसालिन्दालिमालाकुला

शय्या शङ्करचित्तवृत्तिरचिता ताराकुलव्यावृता ।
शुद्धाशुद्धसुधांशुमण्डलकुलव्याप्ता शिवासङ्गमे
शङ्कायातिमुदं ततान परमानन्दाय सा लीलया ॥ २० ॥

कार्याकार्यविचारदूरहृदया मृत्युञ्जयस्य प्रिया
शङ्कालिङ्गनतत्परा मुहुरिहानङ्गव्यथा मास्त्विति ।
ग्रीष्मार्तस्तृषितो जहाति सलिलं प्राप्यामलं कोमलं
कस्तद्वन्न जहाति सापि गिरिजा शङ्काङ्गसङ्गं पुनः ॥ २१ ॥

लोके यन्मधुरं ततोऽपि मधुरं हारं विहारं परं
मेने सा गिरिराजराजतनया सौभाग्यसङ्गालया ।
दुःखानि प्रलयं प्रयान्तु विलयं कार्श्यं प्रयात्वप्रियं
दूरं यान्तु विपत्कुलान्यपि मुहुश्शङ्काङ्गसङ्गादिति ॥ २२ ॥

शङ्कालिङ्गनतत्परा गिरिसुता जाता यदा सा तदा
हारास्तु त्रुटितास्तथाङ्गदयुगं भग्नं च काञ्ची तथा ।
भग्नं कङ्कणमण्डलञ्च कणशो भग्नं तदालिङ्गना-
त्पुष्टा तत्तनुरष्टमूर्तिमहिला लीलाविलासैरलम् ॥ २३ ॥

क्रीडामण्डितगण्डमण्डललसत्कस्तूरिकामण्डनं
कर्पूरागरुकेसरादिरुचिरश्रीखण्डखण्डद्रवैः ।
साकं निर्गतमेव सत्वरमतिस्वेदाम्बुधारान्वितै-
स्तन्नाभीसरसि प्रविश्य रुचिरं तद्गन्धबन्धान्वितैः ॥ २४ ॥

चिरहारविहारसारभारप्रचुरानङ्गविलासलालसायाः ।
विधिकल्पसहस्रमप्यनल्पं क्षणकल्पं समभूद्गिरीन्द्रजायाः ॥ २५ ॥

अमृतामृतमिन्दुमौलिलीलाविलयं क्वाथमनामयं ममेदम् ।
अनुमेयमहोदयं स्वमायाविलयोपायतया शिवापि मेने ॥ २६ ॥

बहुकल्पवियोगजा तनोस्तनुता सा तनुतामवाप रूपम् ।
अनुरूपमवाप तेन रेजे गिरिजा श्रीगिरिनाथकाङ्क्षशङ्काम् ॥ २७ ॥

अमन्दपरमानन्दकल्लोलकलितौ शिवौ। स्वशिवाकारमालोक्य तुष्टौ पुष्टौ पुनःपु
मन्दस्मेरानुसन्धाननिधानमधुना परम्। प्रलब्धमिति तौ तावदन्योन्यानन्दसं
ततःपरं परतरे विहाररससागरे। गौरीहरौ परां क्रीडामव्रीडौ चक्रतुर्भृशम् ॥
एवं क्रीडाविनोदेन नीताः कल्पास्सहस्रशः। ततःपरं शङ्करोऽपिसस्माराानन्दमण्
रत्नैनैकेन रचितं शङ्खयोजनमुन्नतम्। तदनन्तमहाभोगं तावद्योजनमायतम् ॥
तदनन्तसुधारश्मिमण्डलैः परिवेष्टितम्। विद्युत्कूटगणाक्रान्तं तारामण्डलमण्डित
कुन्दमन्दारराजीवराजिसोपानरञ्जितम्। तत्सुधाकुल्यकल्लोलमालिकाललितं
चन्द्रमण्डलपर्यङ्कशिरःपल्यङ्कसंवृतम्। मन्दारकुसुमासारमरन्दरजसावृतम् ॥
केतकीवातपोतेन वीतं पूतं विभूतिभिः। अनुभूतमहानन्दसन्दोहसमलङ्कृतम् ॥
तत्कालकालसल्लापलीलालोलसुधामयम्। अनामयविहाराणामालयत्वेन संश्रुतम्
तस्मिन्नुमासहायत्वमुमया मय्यनामये। सम्पादनीयमित्येव ययौ मृत्युञ्जयस्स्वय
तत्र सिंहासनं दृष्टं कोटियोजनमुन्नतम्। तावदायतमुत्तुङ्गरत्नशृङ्गविराजितम् ॥
तद्घनीभूतमन्दारमकरन्दविराजितम्। तदनन्तमणिच्छायाछायाच्छादितमुत्तम
रुद्रवीणाकोटिगानध्वनिशोभनसाधनम्। तत्फुल्लकुन्दमन्दारशिरीषकुसुमच्छदैः
आच्छादितं विनोदानामास्पदं सदनं प्रभोः। शम्भोर्मनोहरं दृष्ट्वा हृष्टाप्राहशिवा

अम्बा—

केयं सृष्टिर्महादेव न दृष्टा नापि संश्रुता। केन तुल्यमिदं लोके किमितोऽप्यधिकं
ईदृशी रचना शम्भो न कैलासेऽप्यभूत्प्रभो। अचिन्तनीयो महिमा तवायममरप्र
न स्वरप्रसराभावे शिवनामानुगायनम्। अनन्तरुद्रवीणासु श्रूयते तानरञ्जितम् ॥
मनोहरघनीभूतरत्नछायाविराजितः। प्रासादः कोऽयमेतस्मिन्मनोवैभवभावितः ॥
इन्दुमण्डलमश्वस्य निर्माणमतिशोभनम्। तदिन्दुकमनीयेन शयनीयेन रञ्जितम्
नेत्रपात्रमिदं चित्रं त्रिणेत्रात्रास्तु भो स्थितिः। कल्पमात्रमितस्तावदितो गमनमे

व्यासः—

इत्युक्त्वा तत्तदानन्दसन्दोहानन्दमन्दया। मकरन्दश्रियायुक्तंप्रापाम्बासाशिवा
तद्दृष्ट्वा तत्र विश्रान्ताश्रान्तिविस्मृत्यशैलजा। आनन्दरसधाराभिरपाराभिर्विभौद्धि

आनन्दरसमग्ना सा विज्ञानघनसागरम् । गौरी शङ्करमालिङ्ग्य न सस्मार स्ववर्तनम्॥
क्वचिच्चेलं क्वचिच्चोलं धम्मिल्लं च क्वचित्क्वचित् । रससागरमग्नायाःक्वचिद्बाहुलतादिकम्
एवं क्रीडारसेनैव शिवाभ्यां कल्पकोटयः। नीताः क्षणार्धकल्पास्तेसर्वेऽपिशिवयोःपरम्
ततः परं ततोऽप्युच्चैस्तल्पे कल्पितमण्डने । विहारनिरता गौरी शङ्करेण सहादरात् ॥
एवं तल्पेष्वनन्तेषु दिव्यमण्डलमण्डिता । विहारनिरता गौरी विरता न कदाचन ॥५५
प्रतिक्षणं विचित्राणि सा रत्नाभरणान्यपि । स्वतस्समागतान्यम्बासाजहौशिवलीलया
तुङ्गशृङ्गाङ्गसङ्गेन मदङ्गमपि मङ्गलम् । तनोतीति न हारेषु चकार रतिमम्बिका ॥ ५७
शर्वसर्वाङ्गसङ्गस्याप्यन्तरायो भवेदयम्। हारो मनोहरोऽपीति हारं दूरीचकारसा॥५८

सा गौरी कुचमण्डलाय शिखरोत्तुङ्गाय हरान्ददौ
शृङ्गारद्रवपूरिताय रुचिराकाराय धीराय च ।
हारापारजयाय चूचुकलसन्मुद्राय रुद्रप्रिया
हारद्रावणवारणाय वलिकानिश्रेणिकायादरात् ॥ ५९ ॥

सा पश्चाद्दृढगण्डमण्डलतले कस्तूरिकामण्डनं
नासायां नवमौक्तिकं तदधरे ताम्बूलरागं मुहुः ।
ताटङ्कं श्रवणाय फालफलके मुक्तामयं मण्डनं
सीमन्तेऽपि नखप्रचाररुचिरे सा रत्नमालां दधौ ॥ ६० ॥

ताराकारस्थूलमुक्ताफलश्रीगौंरीनासावासमासाद्य सद्यः ।
अद्य प्राप्तं पद्मरागप्रभावं केनेत्येवेत्यादरेणाधरेण ॥ ६१ ॥

सा रत्नाङ्गदमङ्गदोचितमुमा दृष्ट्वा दधौ कङ्कणे
नानारत्नविराजिते करमुखे रत्नाङ्गुलीयान्यपि ।
सादातुं विरता नखप्रतिमया छन्नासु तास्वङ्गुली-
ष्वानीलाभरणानि कान्यपि तथा योग्यानि रत्नान्यपि ॥ ६२ ॥

सा काञ्चीमतिसूक्ष्ममध्यविलसद्भाग्योचिताकुञ्चिता
काञ्ची नेत्यतिभारभीरुहृदया सा तेत्त्वपाकुर्वती ।

१. तद्द्यामिति पाठः ।

मध्ये रत्नमणिप्रभाभिरभितो बद्धं चकाराम्बिका
तच्छङ्कापनयाय सापि जघने तावद्दुकूलं दधौ ॥ ६३ ॥
पादे विद्रुमपद्मरागरुचिरे लाक्षारसासेचनं
सा गौरी न चकार सारुणकरव्यापारभङ्गोद्यते ।
धम्मिल्ले कृतमेव बन्धनमिदं किं विश्लथं निर्गतं
जन्येऽनङ्गमदापहारनिरते युक्तं किमस्येति वा ॥ ६४ ॥
पश्चाच्चन्दनकर्दमेन सहितं कस्तूरिकाकर्दमं
दत्वाङ्गेषु विलेपनौषधधिया जन्यक्षताक्षेपकम् ।
चोलं सा कुचयोस्सुमेरुविजयप्रारब्धयोस्तज्जय-
प्रारम्भे विजयः पुनः पुनरिदं भूयादितीयं शिवा ॥ ६५ ॥
गौरी शङ्करचारुधीरकरजव्यापारचिह्नाङ्किता
शङ्कालिङ्गनमङ्गलैरभिनवैस्सम्पूर्णकामोदया ।
सा सर्वाभरणान्वितेव रुरुचे दिव्याङ्गरागाङ्कितं
शङ्काङ्कं समुपेत्य मङ्गलतमं शृङ्गारधाराकरम् ॥ ६६ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे गौरीशिवमेलनं नाम विंशोऽध्यायः ॥ २० ॥

---

शिवगौरीसंवादो नाम एकविंशोऽध्यायः.

व्यासः—

ततस्स्मरहरापारशृङ्गाररससंयुता । गौरी कुमारं सस्मार शङ्करो लोकशङ्करः ॥
ततस्समागतस्स्कन्दस्सानन्दं सुन्दराननम् । त्रिलोचनंचसंवीक्ष्यप्रणतोदण्डवद्भु
ततः कृताञ्जलिर्भूत्वा शिवौ तुष्टाव षण्मुखः । गणेशेन सहानन्दसागरावतिसादरौ

स्कन्दः—

नमो नमस्ते गिरिशाय तुभ्यं नमो नमस्ते गिरिकन्यकायै ।
नमो नमस्ते वृषभध्वजाय सिंहध्वजायै च नमो नमस्ते ॥ ४ ॥

नमो नमो भूतिविभूषणाय नमो नमश्चन्दनभूषितायै ।
नमो नमः फालविलोचनाय नमोनमः पद्मविलोचनायै ॥ ५ ॥
त्रिशूलहस्ताय नमोनमस्ते नमोनमः पद्मलसत्करायै ।
नमो नमो दिग्वसनाय तुभ्यं चित्राम्बरायै च नमो नमस्ते ॥ ६ ॥
चन्द्रावतंसाय नमो नमस्ते नमोऽस्तु चन्द्राभरणान्वितायै ।
नमस्सुवर्णाङ्कितकुण्डलाय नमोऽस्तु रत्नोज्वलकुण्डलायै ॥ ७ ॥
नमोऽस्तु ताराग्रहमालिकाय नमोऽस्तु हारान्वितकन्धरायै ।
सुवर्णवर्णाय नमो नमस्ते नमस्सुवर्णाधिकसुन्दरायै ॥ ८ ॥
नमो नमस्ते त्रिपुरान्तकाय नमो नमस्ते मधुनाशकायै ।
नमो नमस्त्वन्धकसूदनाय नमोनमः कैटभसूदनायै ॥ ९ ॥
नमो नमो ज्ञानमयाय नित्यं नमश्चिदानन्दघनप्रदायै ।
नमो जटाजूटविराजिताय नमोऽस्तु वेणी फणिमण्डितायै ॥ १० ॥
नमोऽस्तु कर्पूररसाकराय नमो लसत्कुङ्कुममण्डितायै ।
नमोऽस्तु विल्वाम्रदलार्चिताय नमोऽस्तु कुन्दप्रसवार्चितायै ॥ ११ ॥
नमो जगन्मण्डलमण्डनाय नमो मणिभ्राजितमण्डनायै ।
नमोऽस्तु वेदान्तगणस्तुताय नमोऽस्तु विश्वेश्वरसंस्तुतायै ॥ १२ ॥
नमोऽस्तु सर्वामरपूजिताय नमोऽस्तु पद्मार्चितपादुकायै ।
नमश्शिवालिङ्गितविग्रहाय नमश्शिवालिङ्गितविग्रहायै ॥ १३ ॥
नमो नमस्ते जनकाय तुभ्यं नमो नमस्ते गिरिजे जनन्यै ।
नमो नमोऽनङ्गहराय नित्यं नमो नमोऽनङ्गविवर्धकायै ॥ १४ ॥
नमोनमस्तेऽस्तु विषाशनाय नमो नमस्तेऽस्तुसुधाशनायै ।
नमो नमस्तेऽस्तु महेश्वराय श्रीचण्डिके देवि नमो नमस्ते ॥ १५ ॥

व्यासः—

इतिस्तुत्वामहादेवमम्बामानन्दकन्दलाम्।लम्बोदरःकुमारोऽपिताभ्यामालिङ्गितोमुहुः

शिवौ—

वरं वृणु कुमाराद्य लम्बोदर तवेप्सितम् ।

व्यासः—

इत्युक्तं तद्वचश्श्रुत्वा ययाचे स वरं परम् ॥ १७ ॥

कुमारः—

त्वत्पादाम्बुरुहार्चने मतिरुमाकान्तास्तु मे सर्वथा
त्वन्नामस्मरणेऽपि मे शिव शिवे पञ्चाक्षरावर्तने ।
लिङ्गे मङ्गलदायकेऽपि भसिते रुद्राक्षमालास्वपि
स्वामिञ्छाङ्कर सेवनेऽपि सततं हारोपहारेष्वपि ॥ १८ ॥
साङ्गैरध्ययनादिभिर्हर तपस्सङ्घैर्न यागैस्तथा
योगैर्वा न तुलादिदाननिकरैर्भूमण्डलावर्तनैः ।
अन्यैरप्यलमेव धर्मनिचयैरायाससम्पादकै-
र्भो फालानल कालकाल कलये त्वां तेऽनुवेलं पदम् ॥ १९ ॥
भोगाङ्गानि विनश्वराणि भुवि यत्साज्यानि राज्यान्यपि
भो मृत्युञ्जय सर्वथापि निधयस्सापायशङ्काश्रयाः ।
शङ्कातङ्कनिवारकं निरधिकं कालान्तकं केवलं
त्वां मन्ये तत एव सा त्वयि सदा भक्तिर्ममास्तु स्थिरा ॥ २० ॥
गोक्षीरे घृतशर्करादिमधुरद्रव्येषु जिह्वा यथा
लोला तद्वदुमापते शिव महादेवेति नामामृते ।
लोला सन्ततमस्तु चित्तमपि मे त्वत्पादपद्मे मुदा
भृङ्गत्वं समुपेत्य तिष्ठतु वरस्सोऽयं वराणां वरः ॥ २१ ॥
प्राप्य प्रोषितभर्तृकेव रमणं भानुं यथा पद्मिनी
शीतांशुं कुमुदं सुधामिव नरो राज्यानि राजाधमः ।
सुश्रोत्रं बधिरोऽन्धकस्सुनयनं पङ्गुः पदक्षेपणं
वाणीं मूक इवान्तकान्तकपदं पुष्टं प्रहृष्टं मनः ॥ २२ ॥

प्राप्येवोषरभूतले जलमतिश्रान्तो वसन्तं पिको-
वन्ध्या पुत्रमघक्षयं मुनिजनश्चन्द्रं चकोराङ्गना ।
मेघं चातकबालकश्शिवपुरीं विश्वेश्वराराधकः
प्राप्यानन्दममन्दमिन्दुमकुटं मन्मानसं लालसम् ॥ २३ ॥
मच्चित्तं मकरन्दपाननिरतो भृङ्गो मरन्दं यथा
कामी सुन्दरकामिनीमिव धनं निस्वो यथा बालकः ।
स्तन्यं मेघमिवाङ्कुरश्शिव तथा त्वन्नामसङ्कीर्तनं
लब्ध्वा तुष्यतु पुष्टमस्तु सततं याचे न चान्यान्वरान् ॥ २४ ॥
शम्भो त्वच्चरणारविन्दमधुना दृष्टं पुनर्मे कदा
देयं दर्शनमिन्दुशेखर दयासिन्धो यदा नेक्षितम् ।
त्वत्पादाम्बुजमादरेण न तदा ग्राह्यं जलं वा कथं
मामाज्ञापय दर्शनाय भगवन्त्सायं प्रगे वा प्रभो ॥ २५ ॥
एतस्मादधिको वरो वरद मे नापेक्षितस्सर्वथा
शर्वायं शपथश्शिवाचरणयोस्त्वत्पादपद्मेऽपि मे ।
अन्यत्किं मदपेक्षितं शिवपदाम्भोजे भजे सन्ततं
तन्मात्रं मदपेक्षितं हृदयमप्यत्रान्वहं सादरम् ॥ २६ ॥

व्यासः—

इत्याकर्ण्य वचस्तस्य तमालिङ्ग्य मुहुर्मुहुः ।

ईश्वरः—

प्रीतिर्यथा तथैवास्तु त्वदन्यः कः प्रियो मम । गणेश्वरकुमाराभ्यांशिवयापिसहान्वहम्
योगोऽस्त्विति रुचिस्तावदन्यत्र प्रीतिरेव न ॥ २८ ॥

व्यासः—

इत्युक्त्वा पुनरालिङ्ग्य कुमारगणपौ शिवः। वसनानिविचित्राणिददावाभरणान्यपि॥
ततः परमुवाचेदं वचनं गिरिजापतिः । वस्त्राद्यैर्नन्दिकेशादींस्तोषयस्वेति सादरम् ॥
ततः प्रणम्य तं साम्बं निर्गतो गणपान्वितः। रत्नद्वाराण्यपाराणितीर्त्वाविस्मयसंयुतः॥

ततः परं मणिश्रेष्ठरञ्जिते सिञ्जिताश्रिते। मन्दिरे सुन्दरे धीरः कुमारस्सुकरः...
ततस्समागतास्सर्वे नन्दिकेशमुखा गणाः। प्रणताः प्रस्तुवन्तस्तं स्तुतितत्परमा...
ततस्सस्मार तरसा दिव्याभरणपर्वतान्। दुकूलपर्वतानन्यांस्तदा दिव्यान्नपर्व...
तदपेक्षानुसारेण ददौ तेभ्यो यथा क्रमम्। तान्कोटिशः प्रहृष्टास्ते तुष्टुवुर्गणनाय...
ततः परंमन्दिराणिददौतेभ्यस्तदिच्छया। चित्रनिर्माणरम्याणिहर्म्याण्यपिसको...
ततः परं गणास्सर्वे शर्वध्यानपरायणाः। स्वस्वमन्दिरमासाद्य सद्यस्सन्तुष्टमानसाः
ततः परं कुमारोऽपि संयुतो देवसेनया। विहारचतुरो धीरो रम्यं हर्म्यं समाश्रितः।
गणेश्वरोऽपि स्वरया तया सरसया सह। दिव्यं प्रासादमासाद्य हृद्याचाररतो मुदा।
ततःपरं जयामम्बा विजयामपि सादरम्। आहूयाभरणादीनि ददौ ताभ्यांतु...
पश्चान्नान्याङ्गनास्सर्वास्समाहूयशिवातदा। ताभ्योप्याभरणादीनिददौदिव्यानि...
ततः परं महादेवः पुष्पप्रासादमुन्नतम्। सहाससाद शिवया परया हृद्यमुत्तमम्॥४...
तत्र लीलाकल्पितानिदिव्यान्नानिसहाम्बया। भुक्त्वायथेष्टमासाद्यफलानिमुदिता...
ततः परं केतकीनां गन्धमाघ्राय शङ्करः। वातानीतं शिवामाह ग्राह्यो गन्धस्त्वयेत...
ततः परमुवाचाम्बा गन्धान्नानाविधानपि। त्वदुपाघ्रातशेषान्मे प्रयच्छेति मुहुर्मुहुः
ततः परं रुद्रवीणामादाय भववल्लभा। गानविद्या स्वरूपा सा जाता गानरता शिवा।

अम्बा—

शिव शिव हर शम्भो भर्ग भीम स्मरारे त्रिपुरहर यमारे कालकूटान्धकारे।
परशिव परमात्मन्रुद्रवीणा प्रवीणा वदति नखमुखाग्राघातभीतिं हरेति॥४...
सृष्टिरेषा महादेव भूतपूर्वा न सर्वथा। बीजमस्ति किमत्रेति बभाषे वचनं शिवा॥४...

शिवः—

पुरा गन्धर्वनगरे शिवलिङ्गमनोहरे। गन्धर्वराजनारीणां विहारनिकराकरे॥४९॥
हूहूर्नाम्ना प्रसिद्धोऽभूद्गन्धर्वगणनायकः। ससर्वभाग्यसम्पन्नो वदान्यश्च विशेषतः॥
सपुष्पकं समारुह्य चचार भुवनत्रये। कुत्र को वा विशेषोऽस्ति किं प्रियं कस्य वा भुवि
किं वा मनोहरं लोके हराराधनसाधनम्। एवं विचार्य तरसा जगाम गिरिकन्धरम्॥
तत्र कोऽपि महावीरश्शाङ्करः करुणाकरः। शङ्कराराधनोद्युक्तस्तं दृष्ट्वा प्रणतोऽपि स...

ततस्तं वि...
हूहूः—
किमत्र शाम्भवश्रे...
किं कर्तु...
शिवः—
इति तद्वच...
श्रीशैवः—
अत्याश्चर्यकरां वा...
एतदाराधनेनैव ...
अत्र पूर्वमभूद्विप्रो...
कुब्जोविकर्णःका...
स दैवयोगादेतस्य...
ददौ नैवेद्यमुत्कृष्टं...
निधाय शर्करायुक्...
निश्शेषं बुभुजे ते...
भक्षितं पर्णमेवैत...
वृद्धोऽपि स युवा ...
कस्यायं महिमा ...
तेनानीतं महेशाय...
भुक्त्वा तथैव तत्प...
आदाय परमानन्...
महिमा कोऽयमस्...
शिव शङ्कर शर्वे...
कृत्वा फलेन दि...
भक्षयित्वा परं ...

ततस्तं विनयेनैव हूहूर्गन्धर्वसत्तमः ।

हूहूः—

किमत्र शाम्भवश्रेष्ठ स्थीयते गिरिगह्वरे । सौन्दर्यवीर्यसम्पन्नस्सौभाग्यनिलयोऽधुना ॥
किं कर्तुमुद्यतः किं ते दुर्लभं भुवनत्रये ॥ ५९ ॥

शिवः—

इति तद्वचनं श्रुत्वा सोऽपि तं प्राह सस्मितः ॥

श्रीशैवः—

अत्याश्चर्यकरां वाणीं शृणु कर्णविभूषणाम् । अत्रास्ति लिङ्गमुत्कृष्टमिदं सर्वेष्टसाधकम् ॥
एतदाराधनेनैव सिद्धास्सिद्धिं गताःपुरा। सिद्धलिङ्गमितिख्यातं सिद्धिदत्वेननिश्चितम्॥
अत्र पूर्वमभूद्विप्रो दरिद्रो व्याधिपीडितः । कुष्ठी व्रणपरिक्रान्तः कुनखीश्यावदन्तकः ॥
कुब्जोविकर्णःकाणश्चसच्छिद्रमलिनाम्बरः।तेनकाणेनभुक्तानिदुःखानि विविधानिच॥
स दैवयोगादेतस्य लिङ्गस्य निकटे स्थितः । एतल्लिङ्गार्चनं कृत्वा कोऽपि किन्नरपुङ्गवः॥
ददौ नैवेद्यमुत्कृष्टं परमान्नं मनोहरम् । विशाले कदलीपर्णे शिवनैवेद्यमादरात् ॥६१॥
निधाय शर्करायुक्तं घृतधारासमन्वितम् । दत्वा शिवाय नैवेद्यं पूजान्ते शङ्करं स्मरन्॥
निश्शेषं बुभुजे तेन पात्रं त्यक्तं तदन्तिके । ततस्तेन तदाघ्राय सुगन्धसहितं मृदु॥६३॥
भक्षितं पर्णमेवैतत्तूर्णं तु क्षुधया सह । तदा तद्भक्षणादेव प्राप रूपमनुत्तमम् ॥ ६४॥
वृद्धोऽपि स युवा जातस्तदानीमतिसुन्दरः । ततस्स विस्मयाविष्टो हृष्टः पुष्टो मुहुर्मुहुः॥
कस्यायं महिमा किं वा मम पुण्यंपुरातनम् । एवमुक्त्वा स्थिते तस्मिन्पुनर्नैवेद्यमादरात्॥
तेनानीतं महेशाय येनानीतं पुरा मुदा । ततो निवेद्य नैवेद्यं सिद्धेशाय विशेषतः॥ ६७॥
भुक्त्वा तथैव तत्पर्णं तत्र तेन निपातितम् । ततः परं गते तस्मिन्तत्पर्णं तूर्णमेव सः॥६८॥
आदाय परमानन्दमवाप धनिको यथा । ततः परं तदाघ्राय वारं वारं स सादरम् ॥
महिमा कोऽयमस्येति विचारनिरतस्तदा । तदानीमागतश्शैवः कश्चिन्नामानि संवदन् ॥
शिव शङ्कर शर्वेति मुहुर्मुहुरुदारधीः । आगत्य बिल्वपत्राद्यैश्शिवलिङ्गसमर्चनम् ॥
कृत्वा फलेन दिव्येन पूजयामास शङ्करम् । ततस्तत्फलमादाय स नैवेद्यधिया मुदा॥
भक्षयित्वा परं रेजे जित सर्वमनोरथः। तं प्रणम्य ततो विप्रस्सादरं भक्तिपूर्वकम् ॥

अतिविस्मयमापन्नः प्राह शैवं कृताञ्जलिः ॥ ७४ ॥

विप्रः—

शैवेन्द्रपूर्वरूपं ते यदभूत्तन्मनोहरम् । ततस्सहस्रगुणितं रूपमासीदिहाधुना ॥ ७
किमस्य कारणं विद्वंस्तत्वज्ञ वद सादरम् । कस्यायं महिमा किं वा सामर्थ्यं कस्य

श्रीशैवः—

इति तद्वचनं श्रुत्वा शाङ्करस्तमुवाच ह ।

शाङ्करः—

साधु पृष्टं त्वया विप्र शृणु तत्तावदुच्यते । शिवनैवेद्यशेषस्य भुक्तस्य परया मुदा ॥ ७
सामर्थ्यमेतदन्यच्च सामर्थ्यं श्रुतिषु श्रुतम् । यो भुंक्ते शिवनैवेद्यं स तावदतिभाग्यवा
सुन्दरोऽपि भवत्येव सर्वलक्षणसंयुतः । शिवनैवेद्यकोट्यंशकोट्यंशमपि भाग्यवान्
प्राप्नोत्यन्यस्य कस्यापि सतावदतिदुर्लभः । इन्दिरा प्राप सौन्दर्यभाग्यमप्यतुलं
शिवनैवेद्यपात्रस्य सङ्गमेनापि केवलम् । पद्मा भिल्लसती पूर्वमरण्यनिलया सदा ॥ ८
सा भर्त्रा सह काष्ठानि क्रयायानयती स्वयम् । तदेव जीवनं तस्यास्तद्भर्तुरपि सर्वदा
सा कृशा जरयानित्यंपलितापिप्रतिक्षणम् । साकदाचिद्वनेस्थित्वाकाष्ठान्यपितृणा
बध्वावोढुमशक्तापिमूर्ध्न्याधायपपातच । तत्र कश्चिन्महाशैवोबिल्वपत्रादिभिश्शि
सम्पूज्यपान्थःकृत्वान्नंददौशर्वायसादरम् । तन्नैवेद्यं स्वयं भुक्त्वा निश्शेषमतिसा
उच्छिष्टपात्रमन्यत्र त्यक्तं तेन महात्मना । तदेव पात्रं वातेन नीतं भिल्लाङ्गनाकरे ॥
पपात सा ततः पश्चाच्चक्रे देहविसर्जनम् । ततःपरं भटैर्नीता दुर्धटैश्च यमस्य सा ॥
पातिता कालनिकटे तैर्दूतैरतिनिष्ठुरैः । ततः परं यमः प्राह चित्रगुप्तमियं क्व वा
स्थिता किं वा कृतं पापमनया पुण्यमुत्तमम् ।; ८९ ॥

चित्रगुप्तः—

इत्युक्तस्तमुवाचेयं भिल्लनारी यमाधुना । वने मृता कृशा दीना तृषार्ता क्षुधिता
अनया न कृतं पुण्यं मरणात्पूर्वमादरात् । हिंसापरा प्रयत्नेन परपीडनतत्परा ॥ ९
जालेन पक्षिजालानि समादाय यथेच्छया । छित्वा शास्त्रेण बहुधातत्पाकंचकरो
तन्मांसमशनं तस्यास्सुरापानरतापि सा । सेयं पुण्यविहीनैव वने चरति सर्वदा ॥ ९

न दृष्टमनया क्वापि शिवलिङ्गमनुत्तमम् । दीपमालापि विमला न दृष्टा शिवमन्दिरे ॥
नानया शाम्भवो दृष्टो लीलामानुषविग्रहः । सम्मार्जनं च न कृतं तयाशङ्करमन्दिरे ॥
शिवाङ्गणरजःपुञ्जो नापि दूरीकृतस्तया । न दृष्टा शिवपूजापि सर्वकष्टविनाशिनी ॥
न ज्ञातश्शिवमार्गोऽपि भोगस्वर्गापवर्गदः । न विल्वतरुसेवाऽपि कृता भक्तिपुरस्सरम् ॥
न भस्मना ललाटं वा पूतमस्याः कदापि च । रुद्राक्षवार्तापि तया न ज्ञाता सर्वथा यम
शिवाभिषेकपानीयं न पीतं च तया यम । शिवनैवेद्यगन्धोऽपि नाघ्रातो दुष्टयानया ॥
न महादेववार्तापि श्रुता सर्वाघनाशिनी । शिवतीर्थाटनोद्योगस्तया न कृत एवहि ॥
शिवार्चनं न जानाति न श्रुतं च शिवार्चनम् । शिवोत्सवोनदृष्टोऽपिनश्रुतोऽपिकदाचन
तया शिवपुरावासो न कृतोऽपि कदाचन । शिवकुण्डानि दृष्टानि नानया प्रीतिपूर्वकम्
शरीरत्यागसमये शैवोच्छिष्टच्छदान्वयः । जातस्तत्पुण्यमेतस्यास्सर्वाभीष्टप्रदायकम् ॥

शाङ्करः:—

इत्युक्तं तद्वचश्श्रुत्वा प्रहृष्टस्त्वरया यमः । स्पृष्ट्वा तदङ्गं प्रणतः कृत्वा तस्याः प्रदक्षिणम् ॥
ततः परं परं रूपं प्राप सा तत्करान्वयात् । दिव्यमाल्यांवरधरां दिव्याभरणभूषिताम् ॥
ततस्तां स्थापयामास रत्नसिंहासने यमः । पूजयामास पुष्पाद्यैस्ततस्स्वर्गं जगाम सा

किं वर्णनीयमधुना शिवपूजकानां सामर्थ्यमर्थिजनदुःखविनाशकानाम् ।
यद्भुक्तपात्रमपि गात्रविशेषयोगे स्वर्गं तनोति सुखसन्ततिमातनोति ॥ १०७ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे शिवगौरीसंवादो नाम एकविंशोऽध्यायः ॥ २१ ॥

---

## विल्वमूलशिवार्चनमहिमा नाम द्वाविंशोऽध्यायः

श्रीशिवः—

इति शैववचश्श्रुत्वा स विप्रो हृष्टमानसः । पुनर्भिल्लाङ्गनावार्तां पप्रच्छ किमभूदिति ॥

श्रीशैवः—

स्वर्गलोकमनुप्राप्य भुक्त्वा भोगाननेकधा । ब्रह्मलोकमवाप्याथ ब्रह्मणा सापि पूजिता
ततः परं ब्रह्मलोके सा सिंहासनसंस्थिता । ब्रह्मणा पूजिता नित्यं सनकाद्यैश्च सादरम्

ततः कदाचिद्यत्नेन ब्रह्मलोकनिवासिभिः। पृष्टः केयमिति प्रीत्या सादरं स चतुर्मुखः

ब्रह्मा—

किं वक्तव्यमहोधन्याश्शाम्भवानां महात्मनाम्। स्वरूपं वेदसंवेद्यं कथञ्चिदिति मन्म
वेदैरपि न विज्ञातं यद्रूपं तत्कथं मया। वक्तव्यं तत्र मे बुद्धिस्सर्वथाप्यतिकुण्ठिता॥
वैकुण्ठेनापि न ज्ञातं शाम्भवानां स्वभावतः। स्वरूपममलं तत्तु जानाति स महेश्वरः
यद्गात्रमात्रसङ्गेन पवित्रं गात्रमुच्यते। तेषां स्वरूपं शैवानां न ज्ञातुमपि शक्यते॥
शैवाश्चरन्ति भूलोके ते सर्वे शिवविग्रहाः। शिवप्रभावः केनापि ज्ञायते किं जगत्त्रये
यदङ्गसङ्गस्संसारसागरस्यापि शोषकः। स मोचकोऽपि पापेभ्यो वर्णनीयः कथं मया
अलौकिकमिदं चित्रं चरित्रं शङ्करस्य तु। तत्त्रिणेत्रचरित्रत्वाद्वेदान्तविषयोऽपि न
शैवस्य रूपकोट्यंशकोट्यंशांशोऽपि केवलम्। न वेदैरपि वेदान्तैस्सर्वैरपि न निश्चितः
धन्याः कृतार्थास्सर्वज्ञाश्शाङ्करा एव केवलम्। तत्पादरजसो लेशः पुनाति भुवनत्रयम्
सहस्रजिह्वश्शेषोऽपि शैवमाहात्म्यवैभवम्। नैव वर्णयितुं शक्तस्तथैवाहं हरिस्तथा॥
शाम्भवाङ्गानुषङ्गेण महापापविहङ्गमाः। प्रयान्ति नलिकाघातघोषादिव विशेषतः॥
पुरा कश्चिदभूद्राजा प्रजापीडनतत्परः। पापारामाश्रयस्तस्य पापानां गणनापि न॥
परद्रव्यरतो नित्यं परद्रोहरतस्तथा। परनिन्दापरो नित्यं परदाररतस्सदा॥ १७॥
गोहिंसानिरतो नित्यमश्वहिंसारतस्तथा। द्विजहिंसापरो नित्यं तन्नारीदुःखदायकः॥
तद्राज्ये जलपानार्थं मृगा अपि चरन्ति न। अन्येषां तत्र का वार्ता पापिष्ठजनमण्डले
तद्देशे विपिने कोऽपि पान्थश्शैवोत्तमो गतः। तत्र विल्वतरुस्तेन दृष्टो दोषनिवारकः॥
नवविल्वदलाक्रान्तमालवालजलाकुलम्। वेष्टितं परितस्सम्यगुशीरैरतिशीतलैः॥२
तत्रास्ति कुण्डममलं जलकल्लोलमण्डितम्। परितः प्रोक्षितं शुद्धं छायाछन्नमनुत्तमम्
तद्देशराजा विपिने सञ्चरन्मृगघातुकः। तद्विल्वमूले छायार्थमधितिष्ठति शीतले॥२
ग्रीष्मकाले रविकरैः प्रतप्तः पर्यटन्वने। तद्विल्वमूलमाश्रित्य ततो याति पुरं प्रति॥
तं विल्वतरुमालोक्य तुष्टो भवति भूपतिः। तद्रक्षणार्थं वहवस्स्थापिताश्च वनेचराः॥
वातेनापि न लूनैव शाखा विल्वतरोरतः। अन्येन केन वा तस्य शाखा लूना भविष्यति
विल्वशाखा प्रवृद्ध्यर्थं जलं चातीव निर्मलम्। स दापयति भूपालस्तन्मूलं पूर्णमम्बुना

तादृशं बिल्वमूलं तु समाश्रित्य क्षणं स्थितः। स शाम्भवस्तदा राजा सोऽपि तत्र समागतः
ततश्श्रान्तं शैवपर्यं बिल्वमूलस्थितं नृपः। दृष्ट्वा शान्तिरसाक्रान्तस्तुरगादवतीर्य सः ॥
एकाकी स ययौ मन्दं बिल्वमूलं क्षुधातुरः। श्रान्तोभानुकरैस्तप्तःकोऽयमित्याहतंशनैः
ततो वातः प्रचलितश्शैवाङ्गाद्भूतिसंयुतात्। तेन वातेनसंवीतोभूपतिस्सात्त्विकान्वितः

राजा—

तमाह शैवं श्रान्तोऽपि कुतो वा समुपागतः। विपिने तव सञ्चारः कथं शार्दूलसंयुते ॥
निष्ठुरं हि मनः पूर्वं ममेदानीं न तादृशम् ।त्वद्दर्शनादेव मेऽद्य सामर्थ्यं किं तवेदृशम् ॥
मया तु निहताः पूर्वं ब्राह्मणा एव केवलम्। तेषां न गणना नूनमद्य सा धीर्न जायते॥
अहो ममापि विपिने कोऽयं कालविपर्ययः। प्रायो वश्यकरो मन्त्रस्तव तिष्ठति कश्चन
शार्दूलैरपि न स्पृष्टो भवानत्र घने वने। अतस्तं वद मे मन्त्रं तव भृत्यत्वमागतः ॥
मया यद्यत्कृतं पापं तत्सङ्ख्यापि न दृश्यते। तन्निष्कृतिः कथंवास्यात्तत्सर्वंवदसादरम्
अद्यप्रभृति भृत्योऽहं तव नास्त्यत्र संशयः। कृपां कुरु विधेयोऽस्मि सर्वथा तवशाम्भव
त्वदङ्गसङ्गवातेन पूतस्सात्त्विकतां गतः। भूतिं प्रयच्छ मे शैवीं मन्त्रपूतामनुत्तमाम् ॥
पापिष्ठेष्वपकुर्वन्ति करुणामतिसाधवः। किञ्चित्त्वत्सन्निधानेन पापेभ्योऽपि न मेभयम्
त्वं तावत्पापशार्दूलपञ्चानन इति स्मृतः। अतः परं क्व पापेभ्यो भयमद्य भविष्यति॥
त्वत्सन्निधानजनकं न पुण्यं मयि दृश्यते। एतज्जन्मकृतं पुण्यं पूर्वजन्मकृतं च न ॥
अकालवृष्टिरिव मे दृष्टिस्तव विशेषतः। तानि तानि विनष्टानि दुरदृष्टानि कोटिशः ॥
त्वद्दर्शनं पापराशेरशनिस्पर्शनं तव। सर्वपुण्यनिधानानां मूलमित्यवधार्यते ॥ ४४ ॥

ब्रह्मा—

इत्युक्त्वा प्रणतोराजा शैवपुङ्गवमादरात्। ततस्तत्फालभूत्यंशैस्संयुतो भूपतिस्तदा ॥
तद्देहान्निर्गतं पापं गजरूपमुपाश्रितम्। दग्धपुच्छं दग्धतुण्डं ददर्श सहजं नृपः ॥ ४६॥
ततः परं प्रणम्याशु स राजा शैवपुङ्गवम् ॥

राजा—

किमयं भगवन्ब्रूहि धूमाकारो गजोऽधुना।निर्गच्छन्ति किलाङ्गारास्तत्तुण्डाङ्गादनन्तथा
ज्वलत्ययं सधूमोऽपि महापर्वतसन्निभः। तस्मादपि प्रजायन्ते दग्धाः पातकपर्वताः ॥

इदमत्यद्भुतं दृष्टं सर्वकष्टनिवारकम् । सन्निधानंशाम्भवस्यभाग्यंवाकिमतोऽधिकम्॥
सर्वसौभाग्यमूलत्वंज्ञातंत्वत्सन्निधौमया । अहो महदिदं भाग्यं भोगस्वर्गापवर्गदम्॥

ब्रह्मा—

इति तद्वचनं श्रुत्वा प्राह शाम्भवपुङ्गवः ॥ ५१ ॥

श्रीशैवः—

राजन्नाश्चर्यमेवैतन्ममाप्यत्र न संशयः । त्वत्तः कोऽप्यधिको लोके पुण्यवान्नेति मन्ये॥
कृतं विल्वतरोरस्य पालनं जलदानतः । तदम्बुलवमानेन पापनाशस्तवाधुना॥ ५३॥
विल्वमूले त्वया दत्ताश्शीतला जलविन्दवः । तत्सङ्ख्यया प्रणष्टानिपातकानि बहूनि॥
एकस्मिन्दिवसे सिक्तोविल्वस्सलिलविन्दुभिः । तैरनन्तानिपापानिविनष्टानिनसंशयः॥
प्रत्यहं दीयते मूले विल्वस्यास्यनृपोत्तम । जलं तेन महद्भाग्यं मुक्तिश्चाग्रे भविष्यति॥
एतानि विल्वपत्राणि पवित्राणि नृपोत्तम । नूनं त्रिणेत्ररूपाणि पोषितानि जलार्पणैः॥
त्वं तावदधुना वन्द्यो बृन्दारकगणैरपि । तव भाग्यस्य नेयत्ता मम मान्योऽसिसर्वथा॥
महादेवस्वरूपोऽयं विल्वोवेदैरपि स्तुतः । यथा कथं चिदेतस्य महिमा ज्ञायते कथम्॥
वनमेतत्पावनं च विल्वेनानेन केवलम् । एतद्वातानुषङ्गेण लिङ्गमङ्गं प्रजायते ॥ ६०॥
पुण्यतीर्थानि यावन्ति लोकेषु प्रथितान्यपि । तानि सर्वाणि तीर्थानि विल्वमूलेवसन्ति॥
विल्वमूलजलैर्यस्तु मूर्धानमभिषिञ्चति । स सर्वतीर्थस्नातस्स्यात्स एव भुवि पावनः॥
विल्वमूले महादेवं लिङ्गरूपिणमव्ययम् । यः पूजयति पुण्यात्मा स शिवं प्राप्नुयाद्ध्रुवम्॥
विल्वमूले प्रजप्तास्तु मन्त्रास्सिद्धिमुपागताः । तन्मन्त्रमहिमा तावज्ज्ञायते शङ्करेणहि॥
शक्तिहीनोऽपि यो मन्त्रो विल्वमूलेषु जप्यते । स सिद्धस्स्वफलं दद्याद्यदि माहेश्वरप्रियः॥
[1]विल्वमूलं समासाद्य शिव एव स्वयं प्रभुः । लोकानामुपकाराय वनेऽस्मिन्नधितिष्ठति॥
एतस्य विल्वमूलस्याप्यालवालमनुत्तमम् । जलाकुलं महादेवो दृष्ट्वा तुष्टो भविष्यति॥
गन्धपुष्पाक्षतैस्सर्वैरुपचारैः प्रयत्नतः । यो बिल्वं पूजयेद्भक्त्या सन्ततिस्तस्य वर्धते॥
दीपमालां विल्वमूले यः कल्पयति सादरम् । स तत्वज्ञानसम्पन्नो महेशान्तर्गतो भवेत्॥
प्रदक्षिणनमस्कारान्विल्वमूले प्रयत्नतः । ते पापपर्वतानांच नाशकास्स्युर्नसंशयः॥ ६८॥

१. विल्वरूपमिति पाठः ।

नमस्कार्यत्वबुध्या यः प्रणतो दण्डवद्भुवि। तस्मात्पतन्ति पापानि नोत्तिष्ठन्तिकदाचन
बिल्वशाखां समादाय हस्तेन नवपल्लवम्। गृहीत्वा पूजयेद्बिल्वं तेन पापैः प्रमुच्यते ॥
बिल्वमूले शिवरतं भोजयेद्यस्तु भक्तितः। एकं वा कोटिगुणितं तस्य पुण्यं प्रजायते ॥
बिल्वमूले क्षीरयुक्तमन्नमाज्येन संयुतम्। यो दद्याच्छिवभक्ताय स दरिद्रो न जायते ॥
पुरा कश्चिदभूद्विप्रो विन्ध्यमूलमुपाश्रितः। स दरिद्रः कुटुम्बी च पुत्रपौत्रादिसंयुतः ॥
प्रतिद्वारमटत्येव कणार्थं पुत्रसंयुतः। कणान्कथंचित्संप्राप्य तैस्सजीवति भूपते॥ ७४ ॥
ततः परं मुनिवरं मार्कण्डेयं ददर्श सः। कणार्थं स गृहद्वाराण्यटन्नेव सपुत्रकः॥ ७५॥
ततस्तं मुनिशार्दूलं प्रणतो दण्डवद्भुवि। प्राह दुःखसमाक्रान्तः पाहि पाहीति संवदन् ॥

विप्रः—

वृद्धोऽहं पुत्रपौत्राद्यैर्वृतः पत्न्यापि वृद्धया। न भक्ष्यं प्राप्यते विद्वञ्छरीराणिकृशान्यपि
धनपूर्णेषु देशेषु धान्यपूर्णेषु सर्वथा। स्थीयते तैर्न दीयन्ते द्विता अपि कणाः परम्॥
दातुमभ्युद्यताः पूर्वं विरतास्ते भवन्त्यपि। अन्येभ्यो दीयते धान्यं मह्ममेतैर्न दीयते ॥
कदाचित्प्राप्तमप्यन्नं कर्दमेषु पतत्यधः। कदाचिन्नीयते चोरैः पश्यत्येव मयि स्फुटम् ॥
आहारेण विना सर्वे क्रन्दन्त्येतेऽतिबालकाः। अतः परं मया विद्वन्किं कर्तव्यंवदाधुना
युगपद्यदि सर्वेषामेतेषां मरणं भवेत्। तथापि सुखमेवेति मन्ये मुनिगणोत्तम ॥ ८२ ॥

श्रीशैवः—

इति तद्वचनं श्रुत्वा मुनिर्विस्मितमानसः। विचिन्त्य हृदि तद्बीजं ततः परमुवाच तम्॥

मार्कण्डेयः—

जन्मान्तरे त्वया विप्र शैवाय प्रीतिपूर्वकम्। न दत्तमन्नं बिल्वस्य मूले दारिद्र्य नाशके
शाम्भवं रूपमासाद्य साक्षादन्नपतिस्स्वयम्। बिल्वमूलेषु भुक्त्वान्नं करोत्यन्नपतिं नरम्
न दत्तं बिल्वमूलेषु शाम्भवायान्नमादरात्। अतस्तवेदृशं दुःखमन्नाभावेनजायते॥८६॥
अधुना वा बिल्वमूले शाम्भवाय प्रयत्नतः। प्रयच्छान्नमिदं भक्त्यातेनान्नं लभ्यतेत्वया॥
तदन्नस्य प्रदानेन सर्वदाप्यन्नराशिभिः। तूर्णं पूर्णं भवत्येव मन्दिरं तव सर्वदा॥ ८८ ॥
विश्वस्य वचनं विप्र त्वरया बिल्वमुत्तमम्। पश्य प्रयाहि तन्मूले पूजयस्व सदाशिवम् ॥
तत्रैव शाम्भवायान्नं देहि भक्तिपुरस्सरम्। अतः परं न दारिद्र्यं न दुःखमपि जायते

श्रीशैवः—

इति तद्वचनं श्रुत्वा नत्वा तं मुनिपुङ्गवम् । तदेवं धान्यमादाय ययौ विल्ववनं श्री
तत्र विल्वतरोर्मूले दृष्टश्शाम्भवपुङ्गवः। शिवलिङ्गार्चनरतो भस्मोद्धूलितविग्रहः॥
उपवासैः कृशतनुर्वायुमात्राशनस्सदा। तं दृष्ट्वा प्रणतो विप्रः कृतार्थोऽहमिति स्मरन्
ततस्स्वोपार्जितंधान्यंतुषनिर्मुक्तमादरात्। कृत्वापाकोद्यतोजातस्स्नात्वाकुण्डेहराग्नि
विल्वछायासमाक्रान्तेविल्वपत्रसमावृते। ततस्सिद्धं चकारान्नं मृदुलं नवमुत्तमम्॥
तदन्नं समुपादाय विल्वमूले शिवान्तिकम्। नीत्वा शिवाय नैवेद्यं ददौ भक्तिपुरस्स
तदन्नं समभूद्वृद्धं दृष्ट्वा तद्गिरिसन्निभम्। दृष्ट्वा सन्तोषमापन्नः पुत्रपौत्रसमन्वितः॥
ततः परं स शैवोऽपि तदन्नं गिरिसन्निभम्॥ विलोक्य हर्षसम्पूर्णः क्षुधितस्तमुवा

शैवः—

अहो ब्राह्मण धन्योऽसि शिवायान्नमिदं शुभम्। दत्तमन्नं प्रवृद्धं हि भुक्तशेषं शिवेन
तव भाग्यस्य नान्तोऽस्ति दारिद्र्यं नष्टमेव ते। अतःपरंशाम्भवेभ्योदेयमन्नमिदं शु
अस्मिन्वनेविल्ववृक्षाःकोटिशस्संतिशांभवाः। तन्मूलेषुशिवासक्ताश्शिवलिङ्गार्चना
तान्प्रणम्य मुहुर्भक्त्या तेभ्योऽन्नमिदमुत्तमम्। प्रयच्छ तेन सन्तुष्टोभवेदन्नपतिस्स
येनान्नपतिभक्ताय दत्तमन्नं प्रयत्नतः। तेनान्नं प्राप्यते दिव्यं नानाविधमनुक्षणम्॥

श्रीशैवः—

इत्येतद्वचनंश्रुत्वा नत्वा शाम्भवपुङ्गवान्। चकार प्रार्थनं भक्त्या तदन्नग्रहणाय सः
ततस्ते शिवनैवेद्यमिदमत्यद्भुतं नवम्। इति भुक्त्वा प्रहृष्टास्ते तेन तुष्टस्सदाशिवः
ततस्सभुक्त्वा विप्रोऽपि सपुत्रो भार्यया सह। पौत्रैश्च परमानन्दं प्रापाकण्ठान्नसङ्ग
ततो ययौ गृहं सोऽपि स्वकीयं धान्यसंयुतम्। दृष्ट्वा प्रहृष्टो महिमा कोऽयमद्भुत इ
ततः परं विशालानि चकार सदनानिसः। अन्नराशिसमाक्रान्तान्युत्तमानिप्रति
तेन तद्विल्वमूलेषु भोजयामास शाम्भवान्। दिव्येनान्नेन विप्रोऽसौकोटिशोऽप
अतः पूजय भूपाल विल्वमूले महेश्वरम्। प्रयच्छान्नं शाम्भवेभ्यः प्रत्यहं प्रीतिपू
अतः परं न हिंसापि विधेया पक्षिणामपि। कारयस्व प्रयत्नेन सुन्दरं शिवमन्दिर
एतस्मिन्नन्तरे रम्ये वाणलिङ्गमनुत्तमम्। सोमेश्वरात्समानीय स्थापनीयं प्रयत्न

विल्वमूले वाणलिङ्गं स्थापयित्वा समर्चय। विभूतिधारणं कृत्वा कृत्वा रुद्राक्षधारणम्
अतः परं तु विरतस्संसारादघसागरात्। महेश्वररतो भूत्वा लिङ्गपूजारतो भव॥११४

सदोषास्सर्वेषां विषविषमपाकाविषयिणां
विषप्रायाः प्रायः प्रियतममहिष्यादिविषयाः।
अतो हित्वा मोहं भज भज महादेवमघहं
महादेवं हित्वा नहिनहि महोत्साहदमहो॥ ११५॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे विल्वमूलशिवार्चनमहिमा नाम द्वाविंशोऽध्यायः॥ २२॥

---

## विल्वमूलशिवार्चनमहिमा नाम त्रयोविंशोऽध्यायः.

ब्रह्मा—

इति तद्वचनं श्रुत्वा राजा सन्तुष्टमानसः। प्रणम्य दण्डवद्भूमौ तमुवाच शिवार्चकम्॥

राजा—

शिवदीक्षां प्रयच्छाद्य तया पूतो भवाम्यहम्। अनन्यशरणं विद्धि मां पापविरतं नृपम्
शिवदीक्षाप्रभावो वा महिमा शङ्करस्य वा। कीदृशस्तं वदाद्याशु येन पापं विनश्यति॥

ब्रह्मा—

इत्याकर्ण्य वचस्तस्य शाम्भवः प्राह तं नृपम्। विभूतिधारणं कृत्वा शपथं च महेश्वरे॥

शाम्भवः—

शिवदीक्षाप्रभावस्तु शिवेन ज्ञायते परः। यद्यप्यथापि तद्रूपं शृणु सादरमास्तिक॥५॥
शिवमन्त्रे दीक्षितस्य तनुं दृष्ट्वापि दूरतः। प्रयान्ति यमदूतास्तु तथा पातकपर्वताः॥
अधुनैव त्वया दृष्टः पापाकारो गजो महान्। महापर्वतसङ्काशो ज्वलत्यद्यापि पश्यतम्
पापानि गजरूपेण निर्गतानि तवाधुना। मत्फालभूतिसङ्गेन मदङ्गालोकनादपि॥
दीक्षितश्शैवविद्यायां बाल्ये भाग्यवशादहम्। श्रीकालकालकरुणा सम्पूर्णामयितिष्ठति॥
ये ये शाम्भवविद्यायां दीक्षितास्ते तपोधनाः। तत्पादरजसा तावत्पावनं भुवनत्रयम्॥
यस्य शाम्भवविद्यायां भक्तिर्भवति भाग्यतः। तं नमन्तिसुरास्सर्वेशर्वानुग्रहकांक्षया॥

अक्षयं धनमस्माकं सा विद्या शाम्भवी खलु। अन्यद्धनं क्षयं याति न तद्याति
बहुपुण्याब्धयश्शैवास्तां दीक्षां प्राप्य सादरम्। हृष्टा भवन्ति ते तावद्दित्राएवक
न यस्य पातकाद्भीतिर्नियमादपि जायते। तस्य पुण्यस्वरूपस्य विद्या भवति शा
कैलासमपि सम्प्राप्ताश्शैवाश्शाम्भवविद्यया। सोपानरूपा विद्येयं कैलासारोहणो
नान्यैरुपायैस्तल्लाभः कैलासो दुर्लभोऽप्ययम्। सुलभत्वेनविज्ञे यस्तयाशाम्भव
न यस्य शाम्भवी विद्यातस्यजन्मनिरर्थकम्। वन्ध्यातज्जननीराजंस्तेनपुत्रेण
मानुषं जन्मसम्प्राप्य द्विजत्वं च विशेषतः। सम्प्राप्यशाम्भवींविद्यांराजतेद्विजरा
तृप्ता भवन्ति पितरस्तया शाम्भवविद्यया। तद्विद्यासहितं विप्रं प्रणमन्ति मुनीश्वरा
ब्राह्मणश्शाम्भवीं विद्यांयावन्नाप्नोति पुण्यदाम्। तावत्सन प्रणामार्होनदानार्होऽपि
अभ्यस्य शाम्भवीं विद्यां शिवार्चनरतोयदि। तदैवस्यात्प्रणामार्होदानार्होऽपीति
परमा शाम्भवी विद्या दुर्लभा परमार्थतः। अतस्तत्राधिकारोऽपि दुर्लभत्वेननिश्चि
सम्प्राप्य शाम्भवीं विद्यां शम्भुपूजां करोतिचेत्। तदाशिवेनसापूजागृह्यतेप्रीतिपूर्व
तयैव विद्यया दत्तं शिवलिङ्गे जलादिकम्। सुधात्वं यातितेनैवमुक्तास्तत्पितरोऽ
स्वपुत्रं पितरो दृष्ट्वा तया शङ्करपूजया। पीत्वा तज्जलमानन्दं प्राप्तानेच्छन्तिचस्व

ब्रह्मा—

इत्याकर्ण्य वचस्तस्य भूपतिः प्रणतः पुनः। अधुना शाम्भवींविद्यां देहिदेहीति सा
ततस्तद्विनयं दृष्ट्वा वीरश्शाङ्करपुङ्गवः। तथास्त्विति तमप्याह सोऽपि तुष्टस्ततो नृप
ततस्समागता तस्यसेनासावाहिनीनिभा। सङ्ख्यामार्गमतिक्रान्तागजवाजिविरा
तस्य प्रधानपुरुषाः क्व राजा गत इत्यपि। विचारव्याकुलास्सर्वे बिल्वमूलमुपागता
तत्र राजानमासीनं विनयानतकन्धरम्। विलोक्यविस्मयापन्नाःकिमभूदितिभोबु
क्रूरोऽयं पापनिरतः पुराद्य प्रातरन्ततः। अधुना सत्वमापन्नः किमित्याश्चर्यसंयुता
ततस्ते सत्वसम्पन्नास्सन्निधानेन भूपतेः। नतास्ते भूपतिं प्राहुर्गन्तव्यमिति सत्वर
ततस्तानाह भूपालो विस्मयं जनयन्मुदा ॥

राजा—

शृण्वन्तु सावधानेन कर्तव्यमधुनोच्यते। शाम्भवाग्रेसरस्यास्य सन्निधाने सदा मया
स्थातव्यमत्र नगरं रचनीयं विशेषतः। रत्नमन्दिरमत्रैकं कर्तव्यमतिसुन्दरम् ॥

अत्रैव वाणलिङ्गानि स्थापनीयान्यनेकधा । एतस्य विल्ववृक्षस्य छाया मध्यन्दिने रवौ
यावत्तावन्नार्मदानि सन्तु लिङ्गानि कोटिशः । यावती रचना तत्र ततश्शतगुणा यदि ॥
अत्र स्यात्तर्हि सन्तोषस्तत्र तावन्न गम्यते । विश्वकर्मा समायातु रचनां नगरस्य सः ॥
करोतु सत्वरं रत्नैर्नानामण्टपमण्डितम् । अधुना शिवदीक्षार्थं यद्यद्द्रव्यमपेक्षितम् ॥
तदानयध्वं यत्नेन त्वरयेत्याह तान्नृपः ॥ ३९ ॥

ब्रह्मा—

ततस्तद्वचनं श्रुत्वा राज्ञः क्रूरस्य मन्त्रिणः । तदुक्तं सर्वमप्याशु कर्तव्यमिति चोचिरे ॥
ततो निर्मितमेवाशु नगरं स्वर्गसन्निभम् । मन्दिरं च महेशस्य नानारत्नविराजितम् ॥
ततस्स्नात्वा प्रयत्नेन भस्मनोद्धूल्यतां तनुम् । रुद्राक्षमालाभरणस्तमुवाच मुनीश्वरम् ॥
स्वामिन्मध्याह्नगोभानुःपुण्यकालोऽयमुत्तमः । दीक्षासाधनसम्पत्तिर्जातेत्याहनृपोत्तमः
स्थापयित्वाततोभक्त्यामूलेविल्वतरोश्शुभे । लिङ्गानितानिसम्पूज्यविल्वपत्रादिसाधनैः
होमं कृत्वा प्रयत्नेन तया शाम्भवविद्यया । राज्ञे स शाम्भवीं विद्यां ददौ प्रीतिपुरस्सरम्
रराज राजा सम्प्राप्य तां विद्यां शाम्भवीं तदा । नीरन्ध्रमेघनिर्मुक्तभानुमण्डलवद्बुधाः॥
राहुग्रस्तार्कवद्राजा स पूर्वं विद्ययाविना । तां प्राप्य राहुनिर्मुक्त भानुवद्भूपतिर्विभौ ॥
मन्त्रिणस्तं नृपं दृष्ट्वातेऽपिशाम्भवविद्यया । सम्पन्नास्तस्यभार्याश्चतद्भृत्याअपिकोटिशः
ततस्तन्नगरं सर्वं शाङ्करैः परिवारितम् । तत्र शाङ्करवार्तापि श्रूयतेऽपि न कैरपि ॥
शिवमन्दिरसङ्क्रान्तं नगरं सर्वतस्सदा । मन्दिरं तादृशं तत्र न यत्र शिवमन्दिरम् ॥
दृष्टेऽपि नगरे तस्मिन्नतिक्रूरोऽपि शाङ्करः । शिवलिङ्गार्चनपरो भवत्येव न संशयः ॥
दृष्ट्वा तन्नगरं दूराद्भूपालस्य प्रयान्त्यपि । भयग्रस्ताः कृतान्तस्य दूतास्सर्वे मदोद्धताः ॥
एतादृशोऽयं महिमा शाम्भवानामनामयः । अतस्तद्वर्णनं कर्तुं कस्समर्थो भवेद्भुवि ॥
तेन राज्ञा धनं यावदार्जितं पूर्वमादरात् । तत्सर्वं प्रददौ भक्त्या शाम्भवेभ्यस्तदाज्ञया॥
शाम्भवाः प्रत्यहं तेन बिल्वमूलेषु कोटिशः । भोजनाद्यैस्तोषिताश्च प्रत्यहं प्रीतिपूर्वकम्॥
तस्य बिल्वतरोरेकः प्राकारस्तेन कारितः । परितो योजनायामो मणिमण्मलमण्डितः॥
तन्मध्ये रत्नभवनं योजनार्धायतं कृतम् । तत्र लिङ्गानि रम्याणि स्थापितानि बहून्यपि
रत्नमालापरिक्रान्तं तदेव शिवमन्दिरम् । रत्नदीपपरिक्रान्तं रत्नभूषणभूषितम् ॥
उदारास्तस्य ये दाराः कोटिशस्ता मनोहराः । सायं प्रगेऽपिनाथ्यनिचक्रुस्तेगिरिशालये

तद्दर्शनार्थमस्माभिर्गम्यते भक्तिपूर्वकम् । तेनादरः कृतोऽस्माकमेते शैवा इति श्रि
एतादृशेन तेनैव राज्ञा भूमण्डले जनाः । शैवाः कृतास्तदा कोऽपि नाशैवोभुविदृश्
तदा यमालये कोऽपि नास्ति न श्रूयतेऽपि च। कीटाश्च स्वर्गमायान्ति सर्वेतद्देशवा
मृगादीनाञ्च का वार्ता तस्मिञ्छैवे सति श्रिया । रराज भूतलं सर्वं शैवमण्डलमण्डि
तेनोषितमिहाकल्पं सशरीरस्समागतः । स राजा दारसहितो मन्त्रिभिस्सहसादर
स तेनैव शरीरेण वैकुण्ठेऽपि स्थितो मुदा । कल्पमात्रं ततो राजा स्वराज्यमगमन्
एतादृशास्तु वहवस्स्थिताः पूर्वं नृपोत्तमाः । शाङ्करानुग्रहादेव सर्वभाग्यसमन्विताः
इयं भिल्लसती देवाः दुर्भगा व्याधिपीडिता। जीवनं तावदेतस्याः काष्ठविक्रयणा
एतन्मरणकालेतु शैवोच्छिष्टपलाशभाक् । करेऽस्यास्तेन पुण्येन यमेनाभ्यर्चिता
इन्द्रेणाभ्यर्चिता भक्त्या स्वर्गलोकमुपागता । अत्रेयमागता धन्या पूजितापि मया
अतः परं विष्णुलोकं प्रयास्यति विमानतः । वहुकालमुषित्वा सा तत्र तुष्टा भवि
ततः परमियं नारी क्षीरसागरकन्यका । भवित्री रूपलावण्यसंयुता भाग्यसंयुता॥
स सागरस्सुतां दृष्ट्वा सन्तुष्टोऽपि भविष्यति । लक्ष्मीनाम्नानामकर्मसकरिष्यतिसा

सागरः—

उमाप्रसादलब्धेयं कन्यकेयं मयेति च । लक्ष्मीनामाङ्कितां चक्रे तेन सातितरां बभौ
ततस्स कस्मै देयेयं कन्यका कमलानना। इयमाजानदेवानां गणानामपि या खलु
अतः परं कर्मदेवास्तिष्ठन्ति वहवः खलु । तेषु कस्मै प्रदातव्या को वा प्रीतो भवि
श्रेष्ठो नारायणस्तेषु कर्मदेवेष्वतो मया । तस्मै देयेयमित्येव तस्मै दास्यत्यसंशय

ब्रह्मा—

सा तेन परिणीतापि कियत्कालं यथेच्छया । उषित्वा तातसदने पुनर्विष्णुसमन्वि
नारायणस्यरमणीसालक्ष्मीर्लक्षणान्विता । तन्नामानिभविष्यन्तिबहूनिविविधान्
इन्दिराकमलापद्माश्रीरित्यादीनिभोबुधाः। ईदृशं भाग्यमनया प्राप्तं तत्पालसङ्गमा
शिवनैवेद्यफलभुग्भवेज्जनमनोहरः ॥

श्रीशङ्करः—

इतिब्रह्मवचश्श्रुत्वा तत्सभानिलयास्सुराः । अतिविस्मयमापन्नाश्शिवध्यानरताः
तथाच शिवनैवेद्यफलभोजनपुण्यतः। रूपं प्रवर्धते भाग्यं तत्प्रसादस्तु तादृशः ॥



अतः परं किमेतस्
भोजनेन विनष्टा
अनेकजन्मतपसा
शिवनैवेद्यपत्रस्य
श्रीशिवः—
इति तद्वचनं श्रुत्व
इदमेतादृशं लिङ्गं
अस्मिन्लिङ्गे फल
श्रीशिवः—
इति तद्वचनं श्रुत्व
रत्नादिभिस्समभ
ततस्स्वदारानाहू
तैरेव गानमारब्ध
रुद्रवीणाध्वनिं
प्रार्थनास्तैः कृत
ततः परं ससिञ्जे
तास्सर्वा रुद्रवी
व्यासः—
इति तद्वचनं श्रु
वसन्तोत्सवसम
ततः परं समार
स जलक्रीडया
ततो दिव्यदुकू
अङ्गरागं चका
ततः प्रासादम

१. वर्णन

अतः परं किमेतस्य वर्णनीयं विशेषतः। शिवार्पितस्य नीरस्य फलस्यापि विशेषतः ॥
भोजनेन विनष्टानि नैवेद्यस्य महेश्वरे। अर्पितस्याशु पापानि धर्माश्च समुपागताः॥
अनेकजन्मतपसा शिवनैवेद्यमुत्तमम्। प्राप्यते दुर्लभं पुंसां देवानां च विशेषतः॥
शिवनैवेद्यपत्रस्य महिमा वर्णितो मया। आपाततो न सम्पूर्णः पूर्णोवाग्विषयोऽपि न ॥

श्रीशैवः—

इति तद्वचनं श्रुत्वा स विप्रोऽपि प्रणम्य तम्। सिद्धलिङ्गार्चनं कर्तुं चकारमतिमादरात्
इदमेतादृशं लिङ्गं सर्वमङ्गलदायकम्। पूजनीयं प्रयत्नेन देवानामपिदुर्लभम् ॥ ८७ ॥
अस्मिन्लिङ्गे फलं नीरमन्नं वा यत्समर्पितम्। तद्भोजनेन भाग्यानिभविष्यन्त्येवकोटिशः

श्रीशिवः—

इति तद्वचनं श्रुत्वा गन्धर्वनगराधिपः। तल्लिङ्गपूजनोद्युक्तस्सर्वसाधनसंयुतः॥ ८९ ॥
रत्नादिभिस्समभ्यर्च्य सायङ्काले मुहुर्मुहुः। रत्नदीपप्रभाकूटैः पूजयामास सादरम् ॥
ततस्स्वदारानाहूय नाट्यार्थं लिङ्गमन्दिरे। योजयामास ते सर्वे नाट्यविद्याविशारदाः
तैरेव गानमारब्धं नाट्यं कृत्वा पुनः पुनः। रुद्रवीणां समादाय प्रत्येकं लिङ्गमन्दिरे ॥
रुद्रवीणाध्वनिं श्रुत्वा पवनाघातजं मुहुः। सन्तुष्टास्ते दुर्लभोऽयं ध्वनिरित्याहुरादरात्
प्रार्थनास्तैः कृतास्तत्र नाट्यान्तेमुहुरादरात्। अस्मासुरुद्रवीणात्वंभवत्वित्यतिभक्तितः
ततः परं ससिद्धेशस्वरूपेण मया शिवे। तथास्त्विति वरो दत्तस्तेन जातास्तथैवताः॥
तास्सर्वा रुद्रवीणात्वं प्राप्यात्र मम मन्दिरे। तिष्ठन्तिगिरिजे पश्यशृणुतध्वनिमादरात

व्यासः—

इति तद्वचनं श्रुत्वा गौरीसन्तुष्टमानसा। विहारे निरता जाता तद्ध्वनिश्रवणोत्सवैः ॥
वसन्तोत्सवसम्पन्ना कस्तूरीकर्दमादिभिः। समाक्रान्ता महेशोऽपितैराक्रान्तोमुहुर्मुहुः
सरः परं समासाद्य फुल्लराजीवराजितम्। मणिसोपानसम्बद्धं जलक्रीडां चकार सः॥
स जलक्रीडया श्रान्तस्तत्रैव मणिमण्टपे। रत्नसिंहासनाक्रान्ते स्थितो गिरिजया सह
ततो दिव्यदुकूलानि परिधाय महेश्वरः। अम्बया सह दिव्यैश्च भूषणैर्भूषितश्शिवः ॥
अङ्गरागं चकाराशु घनसारद्रवादिभिः। रराज गौरी तैरेव मङ्गला पतिसंयुता ॥
ततः प्रासादमत्युच्चं कुन्दमन्दाररञ्जितम्। तैरेव रचितं प्राप योजनार्बुदमुन्नतम् ॥

१. वर्णनीयं फलं मया इति पाठः।
२. शिवनैवेद्यभोजनं इति पाठः।

तत्र स्थित्वा महादेवस्तया गिरिजया सह । रेमे स परमानन्दविग्रहो मुहुरादरात् ॥

पापारण्यदवानलो जनिजरासंसारहालाहलो
रोगोद्वेगपतङ्गभङ्गनलिकासङ्घातकोलाहलः ।
दुष्टारिष्टसदर्पसर्पकुहरापाराचलानन्दलः
कालः कोऽपि किलापदामपि कथा या कालकालस्य सा ॥ १०९॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे बिल्वमूलशिवार्चनमहिमा नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## शिवस्य रेवानदीतीर गमनन्नाम चतुर्विंशोऽध्यायः.

व्यासः—

तत्र सिंहासनासीनं महेशानमुमा मुहुः । आलिङ्ग्यालिङ्गनैस्तुष्टमष्टमूर्तिमुवाच सा ।

पार्वती—

भगवन्सत्यलोकोऽपित्वया सृष्टो महाप्रभो । तस्य लोकस्य महिमा महानेवातिवर्तते ।
तन्निवासस्य हेतुःकस्तस्य लोकस्य कःप्रभुः।पालनाय नियुक्तोऽस्तितेनपुण्यश्चकिं
इदं सर्वं विशेषेण श्रोतव्यं फाललोचन। कियत्कालमवस्थानं तत्र तस्य भविष्यति ।

व्यासः—

इति तद्वचनं श्रुत्वा मधुरं च मनोहरम् । शङ्करोऽपि सुधारूपां गिरमाह शिवां प्रति ॥

श्रीशिवः—

सत्यलोकोऽपि दुष्प्रापस्सर्वेषामपि सर्वथा। सुमेरुमध्यभागस्थो मद्विलासाश्रयः पुरा
तस्मिन्लोके मनोज्ञानि वनानि सवनान्यपि । जलकल्लोललोलानि विमलानि सरांसि
उत्फुल्लानि सरोजानि सर्वदा तेषु सन्त्युमे । मन्दारतरवस्तत्र कोटिशः कमलानने ॥
तत्रापि सन्ति गिरिजे रत्नमन्दिरकोटयः । तेषु तिष्ठन्ति लिङ्गानि मनोज्ञानि मनोरमे
तदालोकनमात्रेण शुभवृद्धिः प्रजायते। तत्पूजयामङ्गलानि भवन्त्येव प्रतिक्षणम् ॥ १[illegible]
तत्र न क्षुधया पीडा तृषया वा वरानने । तत्र स्थितं पुरा गौरि विहाराय मया तदा ॥ [illegible]

१. कस्य कस्त्वया इति पाठः ।

आगतं नन्दिकेशेन कैलासात्त्वरया शिवे। कुत्र क्रीडति देवेशश्शिव इत्याकुलस्तदा ॥
तत्र सिंह्मासनारूढं वेदवन्दिगणस्तुतम्। मनोज्ञवेषं गीर्वाणवाणीसंस्तुतमादरात् ॥
आगत्य दण्डवन्नन्दी प्रणतो भक्तिपूर्वकम्। विनयाववनतः प्राह कृताञ्जलिपुटश्शिवे ॥

नन्दीश्वरः—

भगवन्देवदेवेश सर्वलोकमहेश्वर। कोऽयं विलासो भगवन्नवस्थानमिदं कथम् ॥ १९ ॥
यादृशी रचना शम्भो कैलासद्वारमन्दिरे। न तत्कोटयंशकोटयंशकोटयंशोऽप्यत्रदुर्लभः
कैलासोपवने शोभा सा शोभा भुवनेषु न। तत्र मन्दारतरवोजायमानाः फलान्विताः ॥
मन्दाराङ्कुरसञ्जातफलानां गणनापि न। प्रसूनैस्सह जायन्ते मन्दाराङ्कुरकोटयः ॥
तदङ्कुरफलस्यापि यो रसस्ससुधारसम्। तिरस्करोऽति सहसा तन्माधुर्यं क्वर्तते ॥
तदङ्कुरप्रसूनानां गन्धलेशोऽपि वस्तुतः। कस्तूरीगन्धसन्दोहतिरस्कारकरः खलु ॥
कुन्दादीनि प्रसूनानि भवन्त्येव प्रतिक्षणम्। तदुत्पत्तिः कदापीश प्रतिवद्धा न सर्वथा ॥
अन्येषामपि पुष्पाणां धारारूपा जनिःखलु। अखण्डबिल्वपत्राणिजायन्तेऽपितदङ्कुरैः
बिल्वाङ्कुरैस्समागत्य शिवलिङ्गस्य पूजनम्। क्रियते बिल्वपत्राद्यैस्तदतीव मनोहरम् ॥
मरन्दधारासिक्तानि शिवलिङ्गानि कोटिशः। बिल्वादिभिः पूजितानि प्रसन्नानिमहेश्वर
तल्लिङ्गदर्शनं त्यक्त्वा मनोऽन्यत्र न यास्यति। तदालोकननेयानि दिनानीति मतिर्मम ॥
तस्मिन्नुपवने शोभा या सा वाग्विषया कथम्। वनशोभा महादेव श्रुता हि शुभदायिनी ॥
भृङ्गैः पिकैश्शुकैर्हंसैश्चकोरैरपि सारसैः। रत्नाकरैरपारैस्तैर्व्याप्तं वनमीश्वर ॥ २७ ॥
सुवर्णवर्णपर्णानां कदलीनां फलैरपि। अपारैर्व्याप्तं शम्भो तद्गन्धैर्व्याप्तं वनम् ॥
तत्रेक्षुदण्डा जायन्ते सुधाफलसमन्विताः। तद्रसादधिकः कोऽपि रसस्तु मधुरोऽपिन ॥
सहकाराङ्कुरैरेव सहकारफलान्यपि। परिपक्वानि जायन्ते प्रसूनं न च दृश्यते ॥ ३० ॥
मुक्ताविद्रुमवल्लीनामन्तस्तत्र न सर्वथा। पुष्पसारस्सर्वथापि सदा पुष्पोच्चयाश्शिव ॥
नीलाचलानां धिक्कारः कृतस्स्यादलिमण्डलैः। तेऽपि गायन्ति नामानिमधुराणितवप्रभो
इदमेतावदीशान कैलासनगराद्बहिः। नगरान्तरशोभा तु न मनोगोचरा प्रभो ॥ ३३ ॥
तत्तादृशं स्थलं त्यक्तं किमत्र स्थीयते प्रभो। इदं हारविहारार्थं कथं वा स्थलमीश्वर ॥ ३४ ॥
समाप्यत्र रुचिर्नेश तव किं वा रुचिश्शिव। लोके रुचिकरं वस्तु तादृशं नैव दृश्यते ॥

यादृशं शङ्करावासे कैलासे सुखमीश्वर। तज्जातीयसुखस्यापि नात्र सम्भावना खलु॥
यदसम्भावितं लोके तत्सर्वं तत्र शङ्कर। अतः कथं वा तत्त्यागे मतिः परमसुन्दरे॥ ३७॥
तव यद्रत्नसदनं कैलासद्वारि दृश्यते। तद्ब्रह्माण्डे न कुत्रापि तत्कोट्यंशोऽपि कुत्र वा॥
तत्र स्थितिर्महादेव तव योग्येति मे मतिः। अयोग्यां स्थितिरत्रेति त्वयाऽपि ज्ञायते प्रभो॥
नाहं विज्ञापनां कर्तुमधिकारी तथापि किम्। विज्ञापनेयं हृदये ज्ञापनायाधितिष्ठतु॥
किञ्चानुग्रहपात्राणि भुवनानि चतुर्दश। तव तानि विचित्राणि रम्याणीत्यपि मन्महे॥
तेषु सर्वेषु भव्येषु भुवनेषु शुभावहम्। कैलासभुवनं मन्ये भवानीरमण प्रभो॥ ४२॥

व्यासः—

इत्याकर्ण्य वचस्तस्य प्राह गौरीमनोहरः। सन्तोषं जनयन्नेव घनगम्भीरया गिरा॥४३॥

सदाशिवः—

सत्यमुक्तं त्वया नन्दिंस्तत्तार्थे विस्मयोऽपिन। कैलासादधिकः कोवादेशोदेशे नुविश्रुतः
स नैव तपसा प्राप्यो घोरेणाप्यमितेन वा। नान्यैरपीति लोकेषु कैलासः परमो मतः॥
न देवेषु यथा देवा मदन्योऽप्यधिकस्तथा। तथा सर्वेषु देशेषु कैलासस्त्वधिकाधिकः॥
यथा गोक्षीरमधिकं क्षीरेषु विविधेष्वपि। तथा .... कः॥ ४७॥
मधुरेषु यथा श्रेष्ठा मधुरा सितशर्करा। तथा .... कः॥ ४८॥
यथा घृतेषु सर्वेषु गोघृतं सुमनोहरम्। तथा .... कः॥ ४९॥
परमान्नं यथान्नेषु सर्वेष्वप्यधिकं श्रुतम्। तथा .... कः॥ ५०॥
यथा तरुषु सर्वेषु श्रेष्ठो बिल्वतरुश्श्रुतः। तथा .... कः॥ ५१॥
यथा फलेषु सर्वेषु श्रीफलस्य फलं वरम्। तथा .... कः॥ ५२॥
यथा सर्वेषु वस्त्रेषु दुकूलं चित्रितं वरम्। तथा .... कः॥ ५३॥
भूषणेषु यथा श्रेष्ठं भव्यं रुद्राक्षभूषणम्। तथा .... कः॥ ५४॥
अङ्गरागेषु सर्वेषु श्रेष्ठा भूतिश्श्रुतिश्रुता। तथा .... कः॥ ५५॥
यथा नरेषु सर्वेषु शाङ्करः पुरुषोत्तमः। तथा .... कः॥ ५६॥
यथा नारीषु सर्वासु नारीरत्नं गिरीन्द्रजा। तथा .... कः॥ ५७॥
यथा तीर्थेषु सर्वेषु शिवगङ्गा वरं यथा। तथा .... कः॥ ५८॥

सरोवरेषु सर्वेषु यथा रुद्रसरो वरम् । तथा सर्वेषु देशेषु कैलासस्त्वधिकाधिकः ॥

यथा पुरेषु सर्वेषु पुरं काशीपुरं वरम् । तथा .... कः ॥ ६० ॥

यथा वापीषु सर्वासु ज्ञानवापी मनोहरा । तथा .... कः ॥ ६१ ॥

मुक्तिमण्टपमुत्कृष्टं मण्टपेषु यथा मतम् । तथा .... कः ॥ ६२ ॥

यथा वैश्वेश्वरं लिङ्गं लिङ्गेषु श्रेष्ठमुच्यते । तथा .... कः ॥ ६३ ॥

यथा मूर्तिषु सर्वासु दक्षिणामूर्तिरुत्तमा । तथा .... कः ॥ ६४ ॥

यथा गिरिषु सर्वेषु श्रेष्ठो हिमगिरिस्स्मृतः । तथा .... कः ॥ ६५ ॥

यथा नदीषु सर्वासु नर्मदा शर्मदा सदा । तथा .... कः ॥ ६६ ॥

यथा मुनिषु सर्वेषु श्रेष्ठः कलशसम्भवः । तथा .... कः ॥ ६७ ॥

यथा मन्त्रेषु सर्वेषु शिवपञ्चाक्षरः परः । तथा .... कः ॥ ६८ ॥

शिवपूजासाधनेषु बिल्वपत्रं यथा वरम् । तथा .... कः ॥ ६९ ॥

यथा वेदेषु सर्वेषु रुद्राध्यायः परस्स्मृतः । तथा .... कः ॥ ७० ॥

यथा सर्वेषु सर्पेषु सहस्रफणिरुत्तमः । तथा .... कः ॥ ७१ ॥

यथा चतुष्पदां मध्ये प्रसिद्धो वृषभेश्वरः । तथा .... कः ॥ ७२ ॥

यथा विद्यासु सर्वासु शिवविद्या परा स्मृता । तथा .... कः ॥ ७३ ॥

यथा भोज्येषु सर्वेषु शिवनैवेद्यमुत्तमम् । तथा .... कः ॥ ७४ ॥

यथा गृहेषु सर्वेषु श्रेष्ठमन्तर्गृहं मतम् । तथा .... कः ॥ ७५ ॥

मन्दिरेषु यथा श्रेष्ठं रम्यं शङ्करमन्दिरम् । तथा .... कः ॥ ७६ ॥

उत्तमाङ्गं यथाङ्गेषु शिवानतिकिणाङ्कितम् । तथा .... कः ॥ ७७ ॥

कुमारेषु यथा श्रेष्ठष्षण्मुखश्श्रुतिषु श्रुतः । तथा .... कः ॥ ७८ ॥

लोहमध्ये यथा श्रेष्ठं काञ्चनं शैलजाप्रियम् । तथा .... कः ॥ ७९ ॥

ब्राह्मणेषु यथा श्रेष्ठश्शाम्भवो ब्राह्मणोत्तमः । तथा .... कः ॥ ८० ॥

यथा रत्नेषु सर्वेषु श्रेष्ठश्चिन्तामणिस्स्मृतः । तथा .... कः ॥ ८१ ॥

यथा ग्रहेषु सर्वेषु श्रेष्ठस्सोऽयं सुधाकरः । तथा .... कः ॥ ८२ ॥

पावनेषु यथा भस्म श्रुत्युक्तं पावनोत्तमम् । तथा .... कः ॥ ८३ ॥

कैलासतुल्यः कुत्रापि [1]वेदेष्वपि न दृश्यते। तथाप्यधिकमस्तीति वक्ता पापकुलाकुलः॥
सन्निधिस्सर्वदा यत्र मम तस्मात्किमुत्तमः। कैलासे सन्निधिर्नित्यं तेनासावधिकस्स्मृतः
विचित्ररचना यत्र वेदान्तागोचरा अपि। ततस्तत्र सुखं यावत्तावदन्यत्र कुत्र वा॥८६॥
सर्वोत्तमस्सकैलासस्तत्र मे रमते मनः। तत्रानन्तानि रम्याणि वसूनि त्रिविधान्यपि॥
रहस्यमन्यद्वक्ष्यामि यत्र मे रमते मनः। तदेव विद्धि नन्दीश कैलास इति सादरम्॥८८॥
गौरीशरीरे रमते मम चित्तमनुत्तमम्। काश्यां शाम्भवचित्तेऽपि तदन्यत्र न सर्वथा॥
त्रिष्वप्यत्युत्तमं मन्ये केवलं शाम्भवं मनः। तत्रानन्दो यथातद्वदानन्दो यत्र कुत्र वा॥
कल्प्यते वहुधा पूजा शाम्भवेन प्रतिक्षणम्। प्रतिक्षणं विशिष्टेष्टक्षणदा सा मनोरमा॥
स तन्मनोविभुतया जातस्तत्र शिवालयः। परार्धयोजनायामः कल्पितो रत्नमण्टपः॥
रत्नप्राकारसंवीतो रत्नमन्दिरमण्डितः। रत्नद्वारार्बुदाकीर्णमेकैकं तत्र मन्दिरम्॥ ९३॥
तत्रापि कल्पतरवः प्रसूनसमलङ्कृताः। अर्पिताः कोटिशस्तेन कल्पितास्शिवमन्दिरे॥
तत्कल्पतरुमध्यस्थं रत्नसिंहासनं वरम्। कोटियोजनविस्तीर्णं कल्पितं तावदायतम्॥
तदग्रे कल्पिता तेन पुष्पशय्या मनोहरा। तत्र स्थितमुमाकान्तं मां चिन्तयति सादरम्॥
नव्यचित्रदुकूलानां पुञ्जैरावेष्टितं मुहुः। नानापरिमलद्रव्यरसरागानुरञ्जितम्॥ ९७॥
दिव्याभरणसङ्कीर्णं भित्तिकाश्चिविराजितम्। रत्नकेयूरनिकरकान्तिराजिविराजितम्
रत्नाङ्गदार्बुदाकीर्णं तत्कान्तिनिकराश्रितम्। रत्नोत्तमपरिक्रान्तकटिसूत्रविराजितम्॥
अपारतारहाराणां विहारैश्च विराजितम्। दिव्यरत्नाङ्गुलीयानां सहस्रेण समन्वितम्॥
मणिश्रेष्ठसमाकीर्णं कर्णाभरणभूषितम्। रक्तरत्नसमाकीर्णकोटीरगणराजितम्॥
नूपुरैरप्यपारैर्मां सदारपरिवेष्टितम्। धूपैर्विचित्रैरगरुप्रभवैरपिधूपितम्॥ १०२॥
रत्ननीराजनव्रातविराजितमुमापतिम्। दिव्यपक्वान्नगिरिभिश्शर्करापर्वतान्वितैः॥
दिव्याज्यवाहिनीयुक्तैस्सन्तोषयति मां मुहुः। सूपशाकगिरिव्रातसमेतोदनपर्वतैः॥
मध्वाज्यवाहिनीयुक्तैस्तोषयत्यनुवासरम्। सुधाफलैरपारैर्मां विविधैर्मधुरोत्तमैः॥
सन्तोषं जनयत्येव सुधाधाराभिरादरात्। ताम्बूलपर्वतानेव पूगपर्वतसङ्कुलान्॥
मुक्ताचूर्णान्वितान्दिव्यान्प्रयच्छति यथेच्छया। एलालवङ्गगिरयः खादिरागिरयस्तथा

1. देशेष्वपीतिं पाठः।

एवं प्रतिक्षणं तेन मानसं मम पूजनम्। करोति प्रत्यहं भक्त्या नृत्यत्यग्रे यथेच्छया ॥
पञ्चामृतप्रवाहैर्मामभिषिच्य मनोहरैः। एवं पूजाविधानेन कल्पिते शाम्भवेन मे ॥
तच्चित्ते यादृशं सौख्यं तन्न क्वापि मनोहरम्। मन्दिरं शाङ्कराकारं दृश्यते नन्दिकेश्वर ॥
समृद्धं सदनं त्यक्त्वा धनधान्यादिभिर्नरः। अन्यत्र याति किं लोकेतथाततपूज्यतेकथम्
गौर्या सह विहारार्थं पुष्पप्रासादकल्पना। क्रियते तेन सततं तत्त्यागे मतिरेव न॥११२॥
शरीरे यादृशी प्रीतिर्मदीये मम सर्वथा। ततोऽप्यत्राधिका प्रीतिश्शाम्भवे विग्रहे सदा॥
तेन छत्राण्यपाराणि मण्डितानिमनोहरैः। कल्प्यतेमणिभिर्दिव्यैर्मुक्ताजालान्वितान्यपि
सुधाकरकराकारैरपारैरपि चामरैः। चारुचामीकराकारदण्डमण्डलमण्डितैः॥ ११५ ॥
नियतं शाङ्करो नित्यं मम सेवां करोत्यतः। रम्यं शाङ्करमेवात्र शारीरं मम मन्दिरम् ॥
किं कैलासेन काश्या वा किं गौर्या मन्दरेण वा। शरीरं शाङ्करंमन्येरत्नमण्डितमन्दिरम्
प्रतिक्षणं तेन पूजा तथा विविधसाधनैः। क्रियते तादृशी कुत्र पूजोपकरणानि ते ॥
मरन्दरससङ्कीर्णकुसुमासारकल्पना। क्रियते तेन सान्येन कल्पनीया कथं मम ॥
तादृशश्शाङ्करो वीरः कलौ कश्चिद्भविष्यति। द्वित्रास्सन्त्यधुनानन्दिन्नेतेपूज्या नसंशयः
एतावत्कालपर्यन्तं त्वया पूजा कृता मम। परन्तु न तथा पूजा कृता ज्ञातापिमेध्रुवम् ॥
अधुना गम्यते नन्दिन्रेवातीरं मनोहरम्। तत्रास्ति शाङ्करः कश्चित्तेन ध्यानं कृतं मम॥
आसाद्य तत्र विश्रम्य गौर्या सहविशेषतः। प्रतिक्षणमपाराभिः पूजाभिः परिवेष्टितः॥
वसामि परमानन्दसागरः करुणाकरः। सायङ्कालेऽपि पूजां मे स करिष्यतिसादरम्
महानिशि महापूजां स करिष्यति सादरम्। ततः परं पुष्पशय्यां स करिष्यति मेपराम्.
रत्नप्रासादमध्यस्थां मन्दिरे रत्नसुन्दरे। विहारसाधनं सर्वं स करिष्यति भक्तितः ॥
रत्नदीपास्सुधाकाराः फलसारा मनोहराः। पुष्पसाराः कल्पनीयामन्दवातामनोहराः
ततः परं स विरतो विहारनिरते मयि। निद्रामुद्रान्वितस्सोऽपि भविष्यति कथञ्चन ॥
इदानीं तु त्वया नन्दिन्कैलासं प्रति सत्वरम्। गन्तव्यं रक्षणं कार्यं कैलासद्वारमन्दिरे

पुनरप्यमृतामृतामृतामृतनामामृतपानलोलुपा।
रसना शिवकीर्तनोत्सुका शिवगङ्गेव पुनाति मानसम् ॥१३०॥

शिवसज्जनसाधुवादगोष्ठी भुवनान्यपि तारयन्ति सत्यम् ॥ १३१ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे शिवस्य रेवानदीतीरगमनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## शैवकृतशिवस्तुतिर्नाम पञ्चविंशोऽध्यायः.

व्यासः—

इत्युक्त्वा श्रीमहादेवो देवदेवश्शिवायुतः । प्रापशैवमनोरूपं मन्दिरं सर्वसुन्दरम् ॥
तेन ध्यातो महादेवस्सर्वदेवशिरोमणिः । अनन्तवेदवेदान्तवन्दिबृन्दनिषेवितः ॥
सेवितः परया भक्त्या गणैरगणितैरपि । बृन्दारबृन्दसन्दोहैरमरैरभिवन्दितः ॥३॥
तुषारगिरिसङ्काशवृषभारूढविग्रहः । रत्नछत्रार्बुदच्छायासमाच्छादितवाहनः ॥ ४ ॥
अपारचामरोद्धूतवातपोतनिषेवितः । गौरीरम्याङ्गसङ्गेन सर्वमङ्गलसंयुतः ॥ ५ ॥
स्वमनोमन्दिरापारप्राकारमणिमण्टपे । पुष्पोच्चयसमाकीर्णे स्थितमीशमचिन्तयत् ॥
तत्रोपहारैरुत्कृष्टैस्सन्तुष्टः पुष्पपूजया । दिव्यनाट्याङ्गनानाट्यविलोकनरतंमुहुः ॥ ७ ॥
अपाररत्नद्वाराणि तीर्त्वा तीर्त्वोन्नतान्यपि । आयान्तं वृषभारूढं चिन्तयामासशङ्करम् ॥
प्रतिद्वारि महेशाय कल्पितं तेन सादरम् । पूजोपकरणं तावद्यावता तुष्टधीर्भवः ॥
अवतीर्यवृषाधीशाद्रत्नसोपानमार्गतः । रत्नसिह्मासनासीनं चकार मणिमन्दिरे ॥ १० ॥
मधुपर्कादिकं सर्वं तेनाशु परिकल्पितम् । गोक्षीरवाहिनी तेन स्नानार्थमपि कल्पिता
घृताम्भोधिःकल्पितोऽपिदधिसाराम्बुधिस्तथा । शर्करागिरयस्तेनस्नानायपरिकल्पिताः
तदाफलरसाम्भोधिस्तदर्थं कल्पितस्तदा । गङ्गाप्रवाहश्शतधा कल्पितस्तेन मूर्धनि ॥
अपाररत्नकलशैः कवोष्णजलसंयुतैः । स्नानं प्रकल्पयामास स तु साम्बाय शाम्भवः ॥
ततः परं दुकूलानि कल्पितान्यमितान्यपि । ततोऽनन्तमणिश्रेष्ठं महासिह्मासनं वरम् ॥
कुन्दादिपुष्पसङ्कीर्णं कल्पयामास सादरम् । त्रिपुण्ड्रं कल्पयामास चन्दनैरनुलेपनम् ॥
अपाररत्नाभरणैर्भूषयामास शङ्करम् । धूपयामास धूपैश्च दीपयामास दीपकैः ॥ १७ ॥
दीपमालाःकल्पिताश्च परितश्शतयोजनम् । सूपोदनाद्रिराज्यस्यवाहिन्यः परिकल्पिताः ॥
शाकपर्वतसङ्कीर्णः कल्पितस्तेन सादरम् । ततः पक्वान्नगिरयःकल्पितास्तेनकोटिशः ॥

शर्करागिरिसंयुक्ता परमान्नस्य वाहिनी । कल्पिता तेन महती मधुराघृतवाहिनी ॥
सुधामधुप्रवाहाश्चकल्पितास्तेनकोटिशः। नालिकेराम्बुवाहिन्यस्तेनसङ्कल्पितास्तदा॥
ततश्च सिततांबूलदलपर्वतपंक्तयः । क्रमुकाद्रिसमाकीर्णाश्चूर्णपर्वतसंयुताः॥ २२ ॥
एलालवङ्गकर्पूरकस्तूरीखदिराचलाः । कल्पितास्तेन छत्राणि विचित्राण्यमितान्यपि॥
कल्पितानि प्रयत्नेन चारु चामरकोटयः । सुगन्धवातास्तेनाशु कोटयः परिकल्पिताः॥
दर्पणान्यपि तेनैव रम्याणिविविधान्यपि । चन्द्रमण्डलतुल्यानिशङ्करायार्पितान्यपि॥
शङ्करार्थे स नाट्यार्थंतूर्णमप्सरसां गणान्।कल्पयामसनिपुणःकोटिशोऽपिमनोहरान् ॥
रत्नदण्डाङ्कितानन्तरत्नछत्राणि शाम्भवः । अपारचामरोपेतानुपकल्प्य स हृष्टधीः॥
प्रतिक्षणंपुष्पवृष्टिं मन्दारकुसुमोद्भवाम्। कल्पयामाससाम्बायशाङ्करस्सादरं द्विजाः॥
एवं तत्कृतया साम्बः पूजया परया तया । सन्तुष्टः प्राह तं सायं वचनैर्मधुरैर्हरः ॥

श्रीशिवः—

कृतं यत्पूजनमिदं मह्यं शाम्भवपुङ्गव । तेन तुष्टोऽस्मि सहसा वरं वृणु यथेच्छया ॥

व्यासः—

इत्युक्तस्तद्वचोवीचीसुधासारपरिप्लुतः । समुद्यतस्स्तुतिं कर्तुं प्रहृष्टश्शाङ्करो द्विजाः॥

शाङ्करः—

नमो नमस्तेऽस्तु नमो नमस्ते नमो नमस्ते गिरिजासहाय ।
मृत्युञ्जयानामय मामवाव गतिस्त्वमेवासि ममेन्दुमौले ॥ ३२ ॥
त्वं कालकूटादिविषोद्भवानि दुःखानि सर्वाणि सुरासुराणाम् ।
दूरीकरोषि त्रिजगज्जनित्री गौरी तवार्धाङ्गमनङ्गशत्रो ॥ ३३ ॥
यो मङ्गलामङ्गलसूत्रसङ्गस्स शाङ्गभङ्गाय कदापि नासीत् ।
स तावदाशु स्मृत एव शम्भो शुभानि सूते सुतरां ततानि ॥ ३४ ॥
सन्तानसङ्घातसमूहवृद्धिस्समृद्धिरीशान पदे स्मृतिर्मे ।
सम्भाविता तात विमुक्तिरन्ते निरन्तराया सुरबृन्दवन्द्य ॥ ३५ ॥
यत्ते महादेवपदारविन्दमानन्दधाराम्बुदसुन्दरं मे ।
आनन्दमत्यद्भुतमातनोति सन्दर्शनादेव पिनाकपाणे ॥ ३६ ॥

कल्याणराशिस्समुदेति वृद्धिं नष्टो महापातकपर्वतोऽपि ।
आनन्दगङ्गापि तरङ्गभङ्गसङ्गेन सिक्तं कुरुते मनो मे ॥ ३७ ॥
अपारपुण्यानि फलोन्मुखानि तपांसि दानान्यमितानि तानि ।
आनन्दगङ्गा ववृधे समृद्धा मतिः प्रवृद्धा मम चन्द्रमौले ॥ ३८ ॥
त्वत्पादपद्मस्मरणेन्दुधाराप्यानन्दधारां तनुते विचित्राम् ।
त्रिणेत्र तत्पात्रमहं पवित्रं त्वन्नेत्रसंसर्गविधूततन्त्रम् ॥ ३९ ॥
यत्पादसेवानिरताः कृतार्थास्सुरेन्द्रलोकादिपदार्थमात्रे ।
वाञ्छां न कुर्वन्ति सुमेरुहस्तो हस्तेन किं वा यवसं विधत्ते ॥ ४० ॥
त्वत्सेवया केवलमिन्दुमौले लक्ष्मीः पुरो धावति वन्दिरूपा ।
वाणी च वाणीरमणं विहायाप्युमासहायस्मरणानुरागा ॥ ४१ ॥
यागैर्नयोगैरपि सागरान्तमहीप्रदानैरपि गोप्रदानैः ।
सुखान्यपाराणि न चन्द्रमौले त्वत्पादुकाराधनहेतुकानि ॥ ४१ ॥
अपारसंसारमहाम्बुराशिविशोषणाय स्मरणं तवैव ।
महाग्निकल्पान्यपि पातकानि धारा धरत्येतदुमासहाय ॥ ४२ ॥
मम त्वदीयश्चरणः प्रभूतमैश्वर्यमाकल्पमनन्यलभ्यम् ।
सम्पादयत्येव विमुक्तिमन्ते किमन्यदत्रापि वराय योग्यम् ॥ ४३ ॥
यस्मादिहामुत्रसुखप्रवाहस्त्वत्पादपद्मानुविलोकनेन ।
अतः किमन्यद्वरणीयमत्र यद्यस्ति तन्मे वद सावधानम् ॥ ४४ ॥
स्वर्गापवर्गप्रदमित्यवैमि निधानदानक्षममित्यवैमि ।
त्वत्पादुकाध्यानमतो महेश किं देयमप्यस्ति जगत्त्रयेऽपि ॥ ४५ ॥
अतः परं केवलमिन्दुमौले त्वत्पादपद्मस्मरणानुरक्तिः ।
विरक्तिरप्यब्जजलोकवासेऽप्यस्तु स्मरारे स्मर मामनाथम् ॥ ४६ ॥
अनाथनाथस्त्वमुमासहाय मामप्यनाथं शरणागतं त्वाम् ।
प्रपन्नमन्दार हरामरेश त्वया सनाथं कुरु मामनाथम् ॥ ४७ ॥
यत्त्व पदाम्भोरुहमब्जजादिमनस्सरोजासनसन्निविष्टम् ।

तत्कष्टनाशाय समर्थमेव स्मृतं कदाचिन्मरणक्षणे वा ॥ ४८ ॥
अर्धेन्दुमौले मरणक्षणे मे विभूतिरुद्राक्षविभूषणस्य ।
त्वत्पादपद्मस्मरणानुरागो भवत्वयं तात तव प्रसादः ॥ ४९ ॥
तातस्त्वमेवासि ममेन्दुमौले माता भवानी युवयोः प्रसादात् ।
महेश्वराराधकसन्ततिर्मे सदा प्रवृद्धास्तु वरोऽयमेकः ॥ ५० ॥
मत्सन्ततिश्शङ्करपूजनेन दिने दिने वृद्धिमुपेत्य नित्यम् ।
करोतु गौरीरमणाङ्घ्रिपूजां प्रजाधनप्रापणहेतुभूताम् ॥ ५१ ॥
लोके महेशार्चकपादुकार्चा धनार्जनासक्तधियो महान्तः ।
सुखानि भुक्त्वा सुकृतैरुदारैर्दारैः कुमारैरपि भाग्यवन्तः ॥ ५२ ॥
अनन्तकल्याणपरम्पराणां निदानमीशस्मरणं वरेण्यम् ।
तदेव तावन्मम सर्वदास्तु मत्प्रार्थनीयश्च तदेव शम्भो ॥ ५३ ॥
शम्भो भवानीरमण प्रभो मां त्वद्दासदासादिपरम्परायाम् ।
विलोक्य वा पाहि कृपानिधानगतिस्त्वमेवासि ममेन्दुमौले ॥ ५४ ॥
त्वमेव मातासि जगज्जनित्री प्रिया महेशस्य पिता त्वमेव ।
महेश तस्मादव दीनबन्धो दयारसार्द्राक्षितटप्रसादैः ॥ ५५ ॥
अपारपापप्रलयानलस्त्वं त्वत्पादपद्मस्मरणं क्षणं वा ।
अक्षीणपुण्याभरणेन लभ्यस्त्वमीश ते पादमनुस्मरामि ॥ ५६ ॥
श्रीकालकालहृदये कलयामि नित्यं त्वां कालकालमहिले कलयेऽनुवेलम् ।
मच्चित्तमस्तु युवयोश्चरणारविन्दे वन्दे मुहुर्मुहुरहं विजहामि मोहम् ॥ ५७ ॥
हे भूतनाथ भगवन्गिरिजासहाय हे देवि गौरि गिरिजे शिववल्लभे माम् ।
पाहि स्मरान्तक यमान्तक चन्द्रमौले पाहि स्मृतापि मधुकैटभहन्त्रि धात्रि ॥ ५८ ॥
पाहि प्रभो भव भयापह मोहशत्रो पाहि त्रिलोचन सुरासुरसार्वभौम ।
पाहि प्रबोधजननि प्रलयावसानश्रीफाललोचनविहारविनोदलीले ॥ ५९ ॥
पाहि प्रपन्नसुरलोकविलोकनेन कृत्वा सुरारिविलयं करुणानिधाने ।
पाहि स्मरारिकरचारुविचारिताङ्घ्रि श्रीमङ्गले सकलमङ्गलदानलोले ॥ ६० ॥

पाहि प्रसीद शिवभक्तमनन्यधन्यमान्यं मदन्यमपि धन्यमनन्यचित्तम् ।
पाहि प्रसादसुमुखैः करुणाकटाक्षैर्दाक्षायणि प्रणतपापविनाशदक्षे ॥ ६१ ॥
पाहि त्वमेव गतिरित्यनुवारमीश त्वत्पादपद्मभजनं करवाणि वाणि ।
सैषा मम स्फुरतु पाहि शिवे भवानि त्वत्पादपद्मभजने मतिरस्तु नित्यम् ॥ ६२ ॥
पाहि स्मरामि हर ते चरणारविन्दं मन्दारकुन्दनवबिल्वदलादिपूज्यम् ।
पाहि स्मरामि गिरिराजसुते त्वदीयं पादाम्बुजं त्रिदशचित्तकलत्रपात्रम् ॥ ६३ ॥

वन्दे सर्वसुरासुरप्रभुमुमाकान्तं प्रशान्तं मुहु-
स्सन्तानद्रुमपुष्पमण्टपमहासिंहासनाधिष्ठितम् ।
आनम्रामरबृन्दमौलिविलसत्कोटीरदिव्यप्रभा-
पुञ्जव्यञ्जितपादुके तव भजे मृत्युञ्जयावाव माम् ॥ ६४ ॥
त्वामाराध्यतमं वदन्ति मुनयस्सोमावतंसं प्रभुं
वेदान्ता अपि संस्तुवन्ति भगवंस्त्वत्पादपद्मं मुहुः ।
त्वद्रूपं विदितं न योगनिकरैर्यागैश्च दानैस्तथा
दीनानामवनैश्च निश्चितमिदं सर्वात्मना शङ्कर ॥ ६५ ॥
शर्वाणीकुचहेमकुम्भविलसत्काश्मीररेणुप्रभा-
पूरापूरितदिव्यकान्तिरुचिरं त्वत्पादपद्मं मुदा ।
वन्दे सुन्दरमद्रिजाकरतलालङ्कारसाराकरं
वारंवारमनुस्मरामि सकलाभीष्टप्रदानाकरम् ॥ ६६ ॥
कारुण्यामृतसागरामरवरापारानतिव्यत्यय-
व्यत्यस्तोन्नतपादुकामितमणिश्रीरञ्जितं मां कुरु ।
त्वामेवाहमुपागतश्शरणमित्यर्धेन्दुमौले स्मर
स्मर्तव्येष्वहमेक एव भगवन्किन्नावसिष्टप्रभो ॥ ६७ ॥
कल्याणानि तनोतु मे तव पदाम्भोजं विपत्सन्ततिं
दूरीकृत्य महाघसागरमहाकल्लोलमालामपि ।

लीला ते खलु कालकाल जगतां सृष्टिस्थितिध्वंसना-
न्यायासोऽपि न तत्र ते सततमप्येतत्तव क्रीडनम् ॥ ६८ ॥
मा मा मुञ्च महेश मामकधिया मद्भागधेयं प्रियं
शम्भो त्वच्चरणारविन्दभजनं तन्मे निधिस्तद्धनम् ।
तन्मे सौख्यमहाम्बुधिश्च तरणोपायोऽप्यपायाम्बुधे-
रानन्दाम्बुधिवीचिकादिरचना चातुर्यमर्यादभूः ॥ ६९ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे शैवकृतशिवस्तुतिर्नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

## शिवार्चनमहिमकथनन्नाम षड्विंशोऽध्यायः.

व्यासः—
इति तद्गिरमाकर्ण्य स कारुण्यार्णवः क्षणम् । सापर्णस्तं विलोक्याह वचनं च सुधामयम्
ईश्वरः—
येयं भवत्कृता पूजा तया तुष्टोऽस्म्यसंशयम्। स्तोत्रेणानेन सुतरां तुष्टःपुष्टोऽस्मि शाम्भव
वरोयःप्रार्थितोभक्त्यासोऽपिदत्तःकिलादरात्। किमदेयंममाप्यस्तिमद्भक्तेभ्योविशेषतः
भवद्भिर्यत्कृतं स्तोत्रं तत्पठेद्यस्स बुद्धिमान् । तत्सन्ततिप्रवृद्धिस्स्यात्तदैश्वर्यं च वर्धताम्
व्यासः—
इत्युक्त्वा तत्कृतां पूजां गृहीत्वा सादरं हरः । तत्रैवान्तर्दधे विप्राः कोटिशो गणसेवितः
ऋषयः—
कथा पापहरा सेयं सुधारूपा श्रुताधुना । पुनःकुत्र स्थितं देव्या सह देवेन शम्भुना॥
व्यासः—
ततः कैलासमगमद्गिरिजावल्लभः प्रभुः । तत्रोपवनमासाद्य विहारनिरतोऽभवत् ॥७॥
रम्योपवनमध्यस्थरत्नमण्टपमध्यगे । रत्नसिंहासने स्थित्वा गौरीमाह हरो गिरम् ॥८
सदाशिवः—
पश्य बिल्वतरून्गौरि बिल्वाङ्कुरसमावृतान्। शिवलिङ्गार्चनरतान्गत्वा गत्वा पुनःपुनः
पश्य प्रसूनवल्लीनां कुलं याति प्रतिक्षणम्। शिवलिङ्गार्चनायाशु प्रसूनफलसङ्कुलम् ॥

पश्य पश्यारविन्दानि सुन्दराण्यतिसुन्दरि । मन्दमारुतसंवीतमन्दारकुसुमान्यपि
पश्याङ्कुरेषु पक्वानि फलानि विमलान्यपि । विपुलानिविचित्राणिरसधारान्वितानि
पश्य पश्येक्षुदण्डाग्रफलमण्डलमम्बिके । तद्रसं च सुधाधारारसधिक्करणक्षमम्॥१
अभूतपूर्वमेवास्मिन्वने सर्वमिहाम्बिके। पश्य पश्य विनोदेन परमानन्द साधनम्।

व्यासः—

शोभामपि नवामेनां पुनः पुनरनुक्षणम् । दृष्ट्वा गौरी महादेवं प्राह विस्मयसंयुता।

पार्वती—

शङ्करापारकरुणारससागरसागर । सादरं वद वृत्तान्तं वनस्यास्य विशेषतः॥१
अमी किं तरवो लोके साङ्कुराः किं चरन्त्यमी। शिवार्चनायपुष्पाद्यैस्स्वतएवाति

सदाशिवः—

पुरा हिमगिरेरेव कन्दरेषु मुनीश्वराः। तप्त्वा घोरेण तपसा श्रान्ता श्रान्ता नि
कल्पावसानपर्यन्तं स्थितास्ते स्वतपोवलात्। ततः परं प्रसन्नोऽस्मि तेभ्य एव शु
ततस्तुत्वा प्रार्थितोऽपि वरस्तैरेव शैलजे । अन्यैरप्रार्थितः पूर्वमपूर्वस्सवरश्शिवो॥
यस्तवस्तैः कृतः गौरि तं त्वं पापहरं शृणु। वरस्वरूपं वक्ष्यामि तत्प्रार्थितमना

ऋषयः—

वन्दे सुराराधितमिन्दुमौलिं वन्दे भवानीरमणं महेशम् ।
वन्दे महामेरुशरासनोरुकोटिप्रभाकूटविघट्टिताङ्गम् ॥ २२ ॥
वन्दे महानन्दपदप्रदानं विहारलोलं खलु कालकालम् ।
वन्दे पुरश्रीपरिहारहेतुं वन्दे स्मरारातिमुमासहायम् ॥ २३ ॥
वन्दे तमर्द्धेन्दुकलावतंसं ताराविहाराकरसंवृतांसम् ।
वन्दे मनोमानसराजहंसं वन्दे भवानीस्मितमन्दहासम् ॥ २४ ॥
वन्दे मुकुन्दाद्यमरासुराणां वन्द्यं च वेदान्तगणस्तुतं च ।
वन्दे प्रपन्नार्तिहरं परं तं वन्दे मुहुश्शङ्करमेव वन्दे ॥ २५ ॥
वन्दे जगत्सर्गविधानहेतुं वन्दे जगत्पालनहेतुमीड्यम् ।
वन्दे जगत्संहरणक्षमं त्वां वन्दे भवानीमुखपद्मभानुम् ॥ २६ ॥
वन्दे मुहुस्संहृतकालकूटं वन्दे स्मरारिं मदनान्तकं तम् ।

वन्दे त्वमेवान्धकदुर्मदान्धमहान्धकारप्रलयानलं तम् ॥ २७ ॥
वन्दे मुदा तं गिरिराजकन्याकुचाङ्ककाश्मीररजःकणान्तम् ।
वन्दे मुहुः फालविलोचनं तं वन्दे त्रिशूलस्फुरदग्रहस्तम् ॥ २८ ॥
वन्दे मुहुस्त्वां मृगशावहस्तं वन्दे शिवालङ्कृतवामभागम् ।
वन्दे विभूतिस्फुरदुन्नताङ्गं रुद्राक्षमालाकुलभूषणं तम् ॥ २९ ॥
वन्दे चतुर्वर्गफलप्रदं तं वन्दे वृषाधीश्वरकेतनं तम् ।
वन्दे जटाजूटतटाभिघातविस्रस्तनक्षत्रगणावृतं तम् ॥ ३० ॥

व्यासः—

इति स्तुत्वा महादेवं ते सर्वे मुनयस्तदा ।

मुनयः—

वरं देहि महादेव वरदोत्तम शङ्कर । प्रसीद नः प्रभो शम्भो प्रपन्नार्ति हराधुना ॥
देहिनस्तरुरूपेभ्यः कैलासं गिरिजापते । कैलासेखलुलिङ्गानिसन्तिदिव्यानिकोटिशः
तत्पूजनोपयुक्तास्स्मस्स्वतस्स्वप्रसवैस्सदा । नाराधितानि लिङ्गानि प्रसवैरनुवासरम्॥
अतो गतं वृथा जन्म तपसा केवलेन नः । किं केवलेन तपसा देहशोषकरेण वा ॥
व्यर्थं गतमिदं जन्म न कृतं लिङ्गपूजनम् । सजीवन्मृत एवेति निश्चितो निगमैरपि ॥
येन नाराधितं लिङ्गं शाङ्गं मङ्गलदायकम् । विल्वपत्रैः प्रसूनैर्वा फलैर्वा विमलैर्जलैः॥
शिवार्चनं चेन्नकृतं तज्जन्म विफलं खलु। लिङ्गे प्रसूनमेकं वा नवं विल्वदलं मुदा ॥
येन दत्तं सभाग्यानां निलयस्स्यादसंशयम्। अनुग्रहःपरं शम्भो कृतोऽस्मासुत्वयाधुना
अनेनानुग्रहेणापि तत्रास्तु तरुरूपता । शिवपूजोपयुक्तानां तरूणां मरणे सति॥३९॥
अपर्णा रमणावाप्तिर्भवतीति श्रुतिश्रुता । अतोऽस्माकं वरानेतानीप्सितान्देहि शङ्कर॥
तदा तरुत्वमस्मभ्यमपूर्वं तत्र दीयताम् । विलक्षणतरुत्वेन स्थितिरस्माकमीप्सिता ॥
कृपाविधेया यदि ते दीनेषु करुणानिधे ॥ ४२ ॥

व्यासः—

इति तद्वचनं श्रुत्वा तथास्त्विति महेश्वरः । तत्रैवान्तर्दधे विप्रास्तत्प्रीतिमभिवर्धयन्॥

ऋषयः—

तपो दानञ्च पूजा च यागाश्च नियमा अपि । शिवप्रसादपर्यन्तं तत्प्रसादफलं यतः॥
प्रसन्ने सति गौरीशे पुनरन्यत्फलन्तु न । फलानां फलमुत्कृष्टं प्रसादश्शाङ्करो यतः॥

व्यासः—

न ज्ञायते प्रभावोऽयं महादेवस्य शूलिनः । वेदान्तैरप्यतस्तस्य महिमा केन वर्ण्यते॥
नीतं जन्म मुदा येन महेशपरिचर्यया । स एव धन्यः पुण्यात्मा सदेवैरपि पूज्यते॥
येनार्चनं महेशस्य शिवलिङ्गे प्रयत्नतः । न कृतं तादृशं जन्म न वरं सत्यमुच्यते॥ ४८॥
पत्रैः फलैः प्रसूनैर्वा नीरैर्दूर्वाङ्कुरैरपि । सम्पूज्य श्रीमहादेवं देवपूज्यः प्रजायते॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । श्रवणेनापि भक्तिस्स्यादितिहासस्य केवलम्॥
पुरा श्रीगिरिदेशेषु कश्चिदासीन्नराधमः । स दरिद्रोऽतिकृपणः कुष्ठव्रणसमाश्रयः॥
स्थित्वा ब्राह्मणवेषेण परहिंसापरस्सदा । ततस्स भिल्लवेषेण मृगया निरतस्सदा॥
अरण्यपक्षिजातानां मृगाणां च विशेषतः । मारणाय प्रवृत्तोऽपि न तद्धिंसां करोति सः॥
अशक्तस्य कथं तेषां हिंसा तेन भविष्यति । तस्मादासायमासीनो विपिने दुर्दशाश्रयः॥
स्वतो मृतो भवेत्पक्षी यदि कश्चित्तदा स तम् । आदाय याति सदनं तेन तस्यापि जीवनम्॥
कलत्रस्य सुतानां च कल्पितं तेन जीवनम् । क्षुधातुरस्सदा सर्वे तत्पोष्यास्ते क्षुधातुराः॥
बृहतीफलजालानि समादाय कदाचन । स भक्षणार्थमुद्युक्तः पाकं कृत्वा क्षुधातुरः॥
तदानीं बृहतीपुष्पमेकमादाय तत्सुतः । बालकः प्रक्षिपद्भूमौ तल्लिङ्गे पतितं ततः॥
ततस्स दैवात्क्षुधया तत्र पञ्चत्वमागतः । तदानीमागताः क्रूराः कोटिशो यमकिङ्कराः॥
ततो नीतो यमभटैः पातितोऽपि यमान्तिके । तत्रोदूराद्विलोक्यापि तं कालः कम्पमागतः॥
तदा कालश्चित्रगुप्तं प्राह कम्पसमन्वितः ।

यमः—

अहो किमिदमाश्चर्यं पश्य पश्येति सादरम् । अद्याद्भुतमिदं दृष्टं दुश्चिह्नमपि जायते॥
भयं च हृदयारूढं किं कर्तव्यमतः परम् । त्रिशूलपाणेरेतस्य दर्शनेन भयं भवेत्॥ ६२॥
कम्पोऽपि भवति स्पष्टं तथा शिवगणादपि । अधुना तादृशं [1]किञ्चिददृष्टमिह दृश्यते॥

१. किंचिन्नदृष्टमिह सर्वथा इति पाठः ।

एवं सत्यपि कम्पोऽयं कुतो वा मे प्रजायते। अधैर्यं च समुत्पन्नं कोऽयमानीयपातितः
दूतैरज्ञैर्मदीयैस्तैरधुना तद्विचार्यताम्। प्रायशस्सोऽयमुत्कृष्टोऽप्यानीतस्तैर्दुरात्मभिः॥
अतः परं मया तेषां शिक्षा कार्या प्रयत्नतः॥ ६६॥

व्यासः—

इति तद्वचनं श्रुत्वा चित्रगुप्तोऽपि विस्मितः। यममाहातिधीरन्तंदूतान्वीक्ष्यार्पितांस्ततः

चित्रगुप्तः—

अहो किमिदमारब्धं महादेवेन तन्मनः। कथं भावि कदा किं वा भवतीति न विद्महे॥
महेश्वरस्स्वतन्त्रोऽसौ करुणारससागरः। विभवास्तस्य बहवस्तेषां सङ्ख्या न विद्यते॥
तस्याधमाधमेऽप्यस्ति कृपा यदि तदा परम्। स सर्वभाग्यसम्पन्नः कैलासमपियास्यति
अनेन यत्कृतं पुण्यं मत्तस्तच्छृणु सादरम्। श्रुत्वापि यस्य माहात्म्यं मुक्तो भवतिमानवः
एतस्य तु पिता दुष्टो नष्टो धर्मविवर्जितः। नानापातकसङ्क्रान्तो दरिद्रो व्याधिपीडितः
भ्रातरोऽप्यस्य दुष्टास्ते माता दुष्टा स्वभावतः। कुलञ्च दुष्टमेतस्य दरिद्रजनसङ्कुलम्॥
एतत्कुलसमुत्पन्नैरन्नमन्नमिति व्यथाम्। कृत्वैव स्थीयते नान्नं लभ्यते केन कैरपि॥
मरणावसरे प्राप्ते ब्रहतीकुसुमं परम्। विच्छिन्नं मलिनं क्षिप्तं तल्लिङ्गे पतितं यम॥७५॥
तावता गिरिजाकान्तस्सन्तुष्टः कष्टनाशकः। स्वदूतानाह तं शीघ्रमानयन्त्विति पुष्पके॥
अतः परं समागत्य किं करिष्यन्ति ते गणाः। तन्न जाने यमाऽतोऽयमकाण्डप्रलयःखलु
अतः परं तमागत्य पाशैर्बध्वा दृढं यम। भवन्तमपि नेष्यन्ति मामप्यत्र न संशयः॥७८॥
दूतानामत्र का वार्ता कृतान्तमरणे तव। अतःपरं क्वगन्तव्यमस्माकं स्थलमेव न॥७९॥
यत्रापि गम्यते तत्र समागत्य गणास्ततः। कुपितास्ते नयिष्यन्ति बध्वा पाशैर्दृढैर्यम॥
दूतानाञ्च त्वया शिक्षा न कृता पूर्वमादरात्। अत एवाऽऽपदो यान्तिकेनस्यात्तन्निवारणम्
अविचार्य कृतं कर्म दूतैरेतैर्दुरात्मभिः। अतो दुःखसहस्राणि तव सम्भावितान्यपि॥
प्रमादो दुःखहेतुर्हि तेन दुःखमवाप्यते। किञ्च न ज्ञातमस्माभिश्शिवतत्वं तथा सति॥
अशिक्षिताश्च दूतास्ते ततस्तैस्तैरनुक्षणम्। सम्भावितानि दुःखानि महापापकुलान्यपि
अतः परं वा यत्नेन तमानय विशेषतः। पूजयस्व यथा कामं प्रमादो मास्तु सर्वथा॥

१. समागत्येति पाठः।

व्यासः—
एतस्मिन्नन्तरे काले शिवदूतास्समागताः । महेशप्रेषितास्सर्वे विमानवरमाश्रिताः ॥
ते समागत्य तरसा पाशैर्बध्वा यमं मुहुः । सन्ताड्य नेतुमुद्युक्तास्तदा ब्रह्मा समागतः
विष्णुस्समागतः पश्चादिन्द्रेण सह सत्वरम् । ततस्ते प्रणतास्सर्वे गणपादाम्बुजे पृथक्
ततः पूजां च कृत्वा ते गणेभ्यो भक्तिपूर्वकम्। तानूचुर्विस्मयाविष्टाःकृताञ्जलिपुटास्सुराः

देवाः—
नमोनमश्शाम्भवेभ्यो गणेभ्योवोनमोनमः। नमोगणपतिभ्योऽपि गृत्सेभ्योवो नमोनमः
नमोगृत्सपतिभ्यश्च व्रातेभ्यो वो नमोनमः । नमो व्रातपतिभ्यश्च विरूपेभ्यो नमोनमः॥
नमोऽस्तुविश्वरूपेभ्योमहद्भ्योवोनमोनमः । रथिभ्यो वो नमस्तुभ्यं रथेभ्यश्च नमोनमः
सेनाभ्यश्च नमोनित्यं सेनानिभ्यश्च वो नमः । क्षत्तृभ्यो वो नमोनित्यं सङ्ग्रहीतृभ्यएव च

व्यासः—
इति स्तुत्वा पुनर्नत्वा गणान्पुष्पकसंश्रितान्। कृताञ्जलिपुटास्सर्वे मूर्ध्नि कम्पमुपागताः
क्षमध्वमपराधान्नस्सर्वथा प्रणतान्सुरान् । पश्यध्वं करुणादृष्ट्या पालनीया यतो वयम्
अयमज्ञो यमो नास्य त्वपराधस्तथा सति । क्षमा विधेया यूयं हि दयाम्बुनिधयस्सदा॥
दूतास्तावदसङ्ख्यातास्तेषां शिक्षापिदुर्लभा । मितानामेवशिक्षा स्यादमितानांतुसाकथम्
यमस्यैकस्य गमनं कथं प्रतिगृहं गणाः । अपारगृहसङ्कीर्णमिदं भूमण्डलं खलु ॥
यदि जानात्ययं तत्वं तदापायोद्यतः[1] कथम् । अधुना तस्य शिक्षापि नानीतस्य कृता खलु
यमोऽपि चित्रगुप्तेन सह सर्वं विचार्य तत् । करोति शिक्षां तद्योग्यां सा पूज्यस्य न सर्वथा
पूज्यापूज्यविचारोऽपि कृतस्तेन भविष्यति। इदानीं तु भवद्भिश्च त्वरया समुपागतम्॥
यमस्य बध्वानयनं यद्याघातपुरस्सरम् । यदा क्व वा दयास्मासु दुःखितेषु गणेश्वराः॥
शिवाज्ञाकारिणामत्र नयद्यप्यस्ति दुर्लभम्। तथाप्यस्तु विचारोऽत्र किं करोतीत्ययं यमः
भवदाज्ञां समुल्लङ्घ्य कोवा जीवितुमिच्छति। स्वर्गेऽपिसत्यलोकेऽपिवैकुण्ठेऽपिविशेषतः
अस्माकमपराधास्तु भविष्यन्ति क्षणेक्षणे । क्षन्तव्यास्ते विशेषेण नमो वो गणनायकाः
कालकालाज्ञया सर्वं भवद्भिः क्रियते यदि । तदा निवारकः को वा सत्यं ब्रह्माण्डमण्डले

१. तदा पापोद्यत इति पाठः ।

किञ्च भृत्यान्विनीतान्मत्सापराधान्विशेषतः । पालयध्वं प्रयत्नेन भवत्प्रतिभटाश्च के॥
अद्भुतं महदैश्वर्यं महादेवस्य तस्य तु । दूता यूयं माननीयाः पूज्याश्चात्र सुरासुरैः ॥
एकेनापि क्षणेनैव शाङ्करेण जगल्लयः । क्षणेन क्रियते तत्र बहूनां कृत्यमस्ति किम् ॥
शिवाज्ञया तु परया भवद्भिस्समुपागतम् । श्रमो वृत्तो हि भवतां लक्ष्यको यस्य किं यमः
कैलासभुवनद्वारि स्थित्वापि स्मरणं यदि । शिक्षार्थं क्रियते तर्हि शिक्षितः किं न वै यमः
यमस्य तस्य का वार्ता वयं सर्वे गणास्सुराः । भवदाज्ञापाशबद्धास्तत्र कस्संशयो भवेत्
किञ्चाद्य भाग्यमस्माकं यूयं शङ्करकिङ्कराः । नेत्रप्रसादपात्रत्वं प्राप्तं तद्भाग्यमेव नः ॥
अद्य श्रीमद्गिरीशानपादुकादर्शनं कृतम् । भवद्दर्शनमात्रेण कृतार्थाश्च वयं गणाः ॥
अस्माकमपि यद्भाग्यं तदद्यैव फलोन्मुखम् । यतोऽद्य भवतां दृष्टाः पुण्याश्चरणरेणवः॥
ब्रह्माण्डमण्डलस्यास्य पावनत्वं प्रकल्पितम् । अधुना पावनानां नो दुःखवार्तापि दूरतः
आशास्यमिदमस्माकं भवत्पादावलोकनम् । तज्जातमधुना तावत्सुखं सम्भावितं खलु

एवं तेषु वदत्सु शङ्करगणास्सर्वेषु बध्वा यमं
देवानप्यनुकूलतामुपगतान्कालस्य सर्वानपि ।
बध्वा तानपराधलेशरहितान्नेतुं तदैवोद्यता-
श्श्रीमृत्युञ्जयशासनेन शमनं सन्ताडयन्तो मुहुः ॥ ११८ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे शिवार्चनमहिमकथनन्नाम षड्विंशोऽध्यायः ॥ २६ ॥

---

## शिवपूजामहिमानाम सप्तविंशोऽध्यायः.

व्यासः—

यमादिबन्धनोद्योगकोलाहलमुमापतिः । श्रुत्वा नन्दिनमाहूय प्राह युक्तं वचस्तदा ॥

श्रीसदाशिवः—

त्वया गन्तव्यमधुना सत्वरं नन्दिकेश्वर । रत्नपुष्पकमारुह्य विलम्बस्तत्र नोचितः ॥
यमानुकूलतां प्राप्तास्सेन्द्रोपेन्द्रा मरुद्गणाः । तानानीय प्रयत्नेन शूलज्वालासु पातय ॥
यावन्तः प्रतिकूलास्ते ते सर्वे शूलघातनैः । तप्तशृङ्खलबन्धैश्च पीडनीयाः प्रयत्नतः ॥

मदाज्ञोल्लङ्घनं कृत्वा प्रवृत्ता ये दुरासदाः। ते पश्चाद्बाहुबन्धेन पीडनीया विशेषतः॥
किञ्च तस्य यमस्यापि तप्तक्रकचघातनैः। यथा पीडा तथा कार्यं तत्र गत्वा प्रयत्नतः॥
तेषामानयनेनात्र न कृत्यमपि दृश्यते। शिक्षा तत्रैव कर्तव्या तप्तमुद्गरघातनैः॥ ७॥
कुम्भीपाके पातनीयाः प्रयत्नेन सुरा अपि। यमानुकूलतां प्राप्तास्ते सर्वे नष्टबुद्धयः॥
किञ्च तेषां यातनायां तेषां चेन्मरणं तदा। सृष्टिरन्यैव कर्तव्या सर्वथापि मदाज्ञया॥
तवप्रतिभटो लोके न कोऽपीत्यवधारितम्। अतस्तत्र यथा कामं सत्वरं याहि सालिः
तत्र तावद्विचारोऽपि न कार्यस्तैस्सहाधुना। प्रतिकूलत्वमापन्ना हन्तव्या एव सर्वथा॥
यदि ते सामवादार्थमायास्यन्ति सुरास्तदा। तीक्ष्णतप्तकशाघातैरविचार्यैव तान्हन॥

व्यासः—

इति तद्गिरमाकर्ण्य प्रणम्यापि महेश्वरम्। कृताञ्जलिपुटो नन्दी प्राह वाक्यं विचक्षणः॥

नन्दिकेश्वरः—

महेश्वराज्ञा शिरसा धृता नात्रास्ति संशयः। त्वदाज्ञाभञ्जको यस्स्यात्स हन्तव्यो न संशयः॥
ब्रह्माण्डमण्डले को वा त्वदाज्ञाप्रतिकूलभाक्। सकम्पा एवतिष्ठन्तिसदासर्वेसुरासुराः॥
अपराधः कदा को वा भविष्यति न विद्महे। इति तिष्ठन्ति सर्वेऽपि सुराश्शासनभीरवः॥
किञ्चाधुना सुरास्सर्वे संहर्तव्यास्त्वदाज्ञया। तावता न भवत्येषां न हानिरपि सर्वथा॥
अन्यामराणां स्वर्गेतु भीतिस्तेषां कथं भवेत्। नूतनापेक्षया जीर्णास्स्वतश्शङ्काकलङ्किताः
एतेषामेवकर्तव्याशिक्षातावद्यथोचितम्। अनुतप्तास्ततस्तेऽपि स्थास्यन्त्याज्ञावशास्सदा॥
शिक्षायां क्रियमाणायामपराधं पुनर्यदि। करिष्यन्ति तदा सर्वे हन्तव्या एव ते सुराः
इति मे भाति भगवंस्त्वयि विज्ञापना मया। अशक्या कर्तुमेवेति निश्चितञ्च मुहुर्मुहुः॥

व्यासः—

इति तद्वचनं श्रुत्वा विचार्य हृदि शङ्करः। सम्यगुक्तं त्वया नन्दिन्नुचितं कुरु सत्वरम्॥
इत्याज्ञप्तः प्रहृष्टोऽपि त्वरया नन्दिकेश्वरः। जगाम पुष्पकारूढो यत्र देवा यमादयः॥
नन्दिकेशं समालोक्य दूरात्ते शिवकिङ्कराः। सकम्पास्ताडयामासुः कशाद्यैरमरान्मुहुः॥
केचित्तप्तकशाघातैर्मूर्छिता एव ते सुराः। मुद्गरैर्भिण्डिपालैश्च ताडिताश्श्वासवर्जिताः॥
तप्तक्रकचसङ्घातनिहताः पतितास्सुराः। चुक्रुशुश्च तदा सर्वास्सकम्पाश्चामराङ्गनाः॥

तत्कोलाहलमाकर्ण्य गन्धर्वाअपि चुक्रुशुः । तथैव मुनयस्सिद्धा गन्धर्वा अपि पन्नगाः॥
ततः परस्परं प्रोचुस्ते सर्वे भयविह्वलाः ॥

देवाः—

दुरात्मना यमेनेदमविचार्य कृतं खलु । शिवाज्ञा विस्मृता तेन प्रमत्तेन दुरात्मना ॥
तत्कृतेनापराधेन सुरास्सर्वेऽपि दुःखिताः । अकाण्डप्रलयारम्भः कोऽयमत्यद्भुतोऽधुना
पाशैर्बध्वा सुरास्सर्वे पातिताश्शस्त्रमण्डले। महाग्निज्वालया दग्धेकशाघातैश्च पीडिताः॥
अयं निरन्तराक्रोशः कदा शान्तो भविष्यति। कदा वा नाशमभ्येति सेयं त्रिदशदुर्दशा
एतावत्कृतमेतैस्तु गणैर्नन्दी समेष्यति। स किं वा कर्तुमुद्युक्तस्तत्तावज्ज्ञायतेऽपि न ॥
गणश्रेष्ठस्य तस्यात्र किमशक्यं स शौर्यवान्। किञ्च सम्पत्समायातु महापद्वा विशेषतः॥
भोक्तव्यमागतं सर्वैरस्वतन्त्रैस्सुरैरपि ॥ ३४ ॥

व्यासः—

एवं वदत्सु सर्वेषु तत्तल्लोकनिवासिषु। तत्र नन्दिनमालोक्य प्रणताश्शिवकिङ्कराः ॥
प्रणम्य नन्दिकेशं तं गणाः प्रोचुर्नताननाः ॥

गणाः—

अस्माभिः कृत्यमेतावत्कृतं पश्य विशेषतः। यमानुकूलवचनैरेते बद्धास्सुराः परम् ॥
तप्तशृङ्खलया खड्गैर्निहताश्चाग्निसङ्कुलैः। यमस्तु पूर्वमेवात्र प्रबद्धः प्रहतोऽपि च ॥
एते तु मूर्छितास्सर्वे कशाघातप्रपीडिताः। अतः परं किमस्माभिः कर्तव्यं तद्वदाधुना॥
त्वदाज्ञाकारिणस्सर्वे वयं तावदसंशयम् ॥ ३९ ॥

व्यासः—

ततस्सुरास्तु तं दृष्ट्वा नन्दिकेशं गणोत्तमम्। ततस्समुत्थितास्सर्वे नन्दिकेशावलोकनात्
तत्कटाक्षामृतासिक्तास्सर्वे ते विगतज्वराः। विच्छिन्नबन्धास्सर्वेऽपि प्रणतास्तत्पदाम्बुजे
पाहि पाहि कृपासिन्धो सापराधानपि क्षणम्। कटाक्षकरुणासारैरभिषिच्य मुहुर्मुहुः ॥
शिवाज्ञोल्लङ्घनं तावदस्माभिर्न कृतं प्रभो। तथापि दुरवस्थेयं त्रिदशानामपीदृशी॥
शिवपूजापरित्यागो न कृतस्सर्वथा सुरैः। तथापि .... शी ॥ ४४ ॥
शिवध्यानपरित्यागो न कृतस्सर्वथा सुरैः। तथापि .... शी ॥ ४५ ॥

शिवार्चकाराधनं च न त्यक्तं सर्वथा सुरैः । तथापि दुरवस्थेयं त्रिदशानामपीदृशी ॥
उद्धूलनपरित्यागो न कृतस्सर्वथा सुरैः । तथापि .... शी ॥ ४७ ॥
रुद्राक्षधारणत्यागो न कृतस्सर्वथासुरैः । तथापि .... शी ॥ ४८ ॥
शिवपूजाद्रव्यनाशो न कृतो बुद्धिपूर्वकम् । तथापि .... शी ॥ ४९ ॥
उपेक्षितश्च नास्माभिरधुना शिवमन्दिरम् । तथापि .... शी ॥ ५० ॥
शिवदूषणवार्तापि न श्रुता क्वापि सर्वथा । तथापि .... शी ॥ ५१ ॥
शिवावज्ञा कृता क्वापि सर्वथा न सुरैरिह । तथापि .... शी ॥ ५२ ॥
न शाङ्करगणावज्ञा सर्वथापि कृता सुरैः । तथापि .... शी ॥ ५३ ॥
न त्यक्तमधुना देवैश्शिवनिर्माल्यधारणम् । तथापि .... शी ॥ ५४ ॥
शिवतीर्थाटनत्यागो न कृतस्सर्वथा सुरैः । तथापि .... शी ॥ ५५ ॥
शिवनिन्दकपापिष्ठपोषणं न कृतं सुरैः । तथापि .... शी ॥ ५६ ॥
शिवाभिषेकपानीयमपीत्वा न स्थितं सुरैः । तथापि .... शी ॥ ५७ ॥
न त्यक्तं शिवनैवेद्यभोजनं च सुरैरिह । तथापि .... शी ॥ ५८ ॥
शिवमार्गामार्जनं च न कृतं सर्वथा सुरैः । तथापि .... शी ॥ ५९ ॥
शिवमार्गे कण्टकानां न कृतं चानिवारणम् । तथापि .... शी ॥ ६० ॥
शिवालयामार्जनं च न कृतं सर्वथा सुरैः । तथापि .... शी ॥ ६१ ॥
शिवालयापरिष्कारो न कृतस्सर्वथा सुरैः । तथापि .... शी ॥ ६२ ॥
शिवदीपापरिष्कारो न कृतस्सर्वथा सुरैः । तथापि .... शी ॥ ६३ ॥
शिवनीराजनादानं न कृतं सर्वथा सुरैः । तथापि .... शी ॥ ६४ ॥
शिवधूपानर्पणं च न कृतं सर्वथा सुरैः । तथापि .... शी ॥ ६५ ॥
शिवानिवेदितान्नानि न भुक्तानि कदाचन । तथापि .... शी ॥ ६६ ॥
शिवानिवेदितं नीरं न पीतं सर्वथा सुरैः । तथापि .... शी ॥ ६७ ॥
शिवानिवेदितं वस्त्रं नोपभोगाय कल्पितम् । तथापि .... शी ॥ ६८ ॥
शिवानिवेदितं सौख्यं नोपभोगाय कल्पितम् । तथापि .... शी ॥ ६९ ॥
रम्भासम्भोगकालेऽपि शिवविस्मरणं न नः । तथापि .... शी ॥ ७० ॥

यथापराधमस्माकं विधेयमपि शासनम्। महेशानं न जानीमो महेशानस्त्वमेव नः॥७१
आर्तार्तिध्वान्तहरणे करुणातरणि क्षणम्। तरुणो वास्त्वतरुणो दक्षो दक्षहरप्रियः॥

व्यासः—

इति देववचश्श्रुत्वा नन्दिकेशः कृपानिधिः। तद्दुर्दशापहरणं चकार तदनन्तरम्॥७३॥
ततस्सिह्मासनारूढो विमानादवतीर्य सः। सुरैराराधितो नन्दी तानुवाच यथोचितम्॥

नन्दिकेश्वरः—

अपराधो यमेनाद्य यः कृतस्तेन जीवनम्। असम्भावितमेवेति विज्ञेयमधुना सुराः॥
न कालमात्रप्रलयो भवतामपि तद्वशात्। सम्भावितोऽत्र प्रलयस्सदैवादेशतोऽभवत्॥
उग्रोऽप्यनुग्र एवासीत्प्रार्थनावचनैर्मम। अन्यथा सुरवर्गस्य जातस्स्याद्विलयः खलु॥
भवद्भिस्सह या मैत्री मम या सा परं सुराः। भवतां रक्षणायासीदन्यथातत्कथंभवेत्॥
यमस्याप्यपराधोऽत्रवस्तुतोनास्तियद्यपि। तथापि दूतदौरात्म्यं यमनाशाय कल्प्यते॥
नशिक्षयतिकालोऽयं कालेकालेस्वकान्मुहुः। दूतानतश्शिक्षयेतिसवक्तुमिवशिक्षितः॥

व्यासः—

इत्युक्तवन्तं तं देवाः कालेनापि समन्विताः। प्रणताः पुनरूचुस्ते विनयानतकन्धराः॥

देवाः—

आनीतस्तावदधुना स तावन्नैव शिक्षितः। न हतः पीडितोवापि विचारःक्रियतेऽधुना॥
अविचार्य कथं कर्म कर्तव्यमधुना सुरैः। असर्वज्ञास्स्वभावेन सर्वज्ञः केवलश्शिवः॥
विना विचारं यद्यस्य पूजनं क्रियते तदा। जातस्स्यादपराधोऽपि नस्याद्वातन्न विद्महे
किमस्य पुण्यं पापं वा प्रवृद्धं तद्विचार्यतु। पश्चात्कार्यं यथा योग्यं कर्तव्यमिति निश्चयः॥
गणाभ्यागमनेनायं ज्ञायते पुण्यवानिति। तत्पूर्वं तत्कथं ज्ञेयं ज्ञायते नाधुनापि तत्॥
किमनेन कृतं पुण्यं भवदागमनक्षमम्। न दानैरपि यागैर्वा भवदागमनं भवेत्॥
तुलादानादिदानानि कृतानिबहुभिर्मुहुः।तेऽप्यागत्यात्र तिष्ठन्ति विचारःक्रियतेततः॥
यागाअप्यश्वमेधान्ताःकृतायैस्तेऽपिसन्ततम्।आगत्यात्रतुतिष्ठन्तिपश्चात्स्यात्तद्विचारणा
अनेकयुगपर्यन्तं यैः कृतं तपसा कृशम्। शरीरं ते समागत्य तिष्ठन्त्येतान्विलोकय॥
एतैर्गोकोटिदानानि कृतानि बहुधा पुरा। तिष्ठन्त्यत्रैव ते सर्वे तानेतान्पश्य सत्वरम्॥

यैर्भूप्रदक्षिणं पूर्वं कृतं तैरप्यनाकुलैः । स्थीयते पश्य पश्यैतान्कोटिशो नन्दिकेश्वर ॥
आयास्यन्त्यधुनाधन्याधनवृष्टिपरायणाः । द्रष्टव्यास्तेत्वयास्वामिन्येतानप्यवलोकय॥
अनेन प्रत्यहं लक्षं रत्नानामेव दीयते । ब्राह्मणेभ्यः प्रयत्नेन तिष्ठत्यत्रावलोकय ॥
अनेन प्रत्यहं लक्षं गवां दत्तं महात्मना । अयञ्च स्थापितोऽस्त्यत्रतद्विचारोभविष्यति॥
अनेन सस्यसम्पूर्णा मही दत्ता मुहुर्मुहुः । एतस्यागमने कालो भूयानेव गतः खलु ॥
वनान्यनेन वहुधा सवनानि कृतान्यपि । एतादृशाः कोटिशोऽपि तिष्ठन्त्यत्र यमालये॥
तटाकाः कारितास्तेन कोटिशस्सागरोपमाः । एतादृशाःकोटिशोऽपितिष्ठन्त्यत्रयमालये
अत्यूषरे महारण्ये प्रपास्तैः कारिता मुहुः । महाग्रीष्मेऽपि तिष्ठन्ति पश्यैतान्यममन्दिरे
अनेन मेरुतुल्यानि दत्तानि वसनान्यपि । दरिद्रेभ्यो विशेषेण पश्य तं यममन्दिरे॥
गोक्षीरकुम्भाश्शतशो दत्तास्तेन प्रयत्नतः । प्रत्यहं विप्रवर्गेभ्यः पश्य पश्य यमालये॥
अन्नप्रदानैरेतेन कोटिशस्तोषिता द्विजाः । एतादृशान्मुहुः पश्य कोटिशो यममन्दिरे॥
कन्यादानैर्विनीतस्तैः कालः कनकसंयुतैः । एतादृशाःकोटिशोऽपिसन्तिपश्ययमालये॥
आवृत्तानिमुहुस्तैस्तु महादानानि कोटिशः । न तेषां गणनाप्यस्तिसर्वथाययममन्दिरे॥
गोकोटिपानयोग्यानिकुल्यान्यपिकृतानितैः । पश्यतान्नन्दिकेशाद्ययममन्दिरसंस्थितान्
रत्नप्रासाददानानि तैः कृतान्येव कोटिशः । तेषां न गणनाप्यद्य पश्य पश्य यमालये॥
कृतानि तैःकोटिशोऽपिसरांसिविपुलान्यपि । वाप्यःकृताश्चसंपूर्णा जलैःपश्ययमान्तिके
पर्यङ्कशय्यादानानि कोटिशस्तैः कृतान्यपि । पश्य तान्पतितान्दूरे छत्रदानपरानपि॥
धनैर्धान्यैश्च गोवृन्दैर्गृहोपकरणैस्सह । गृहास्तु कोटिशो दत्तास्तैस्तानत्र विलोकय॥
पान्थछायानुकूलाश्च वृक्षास्तैःकोटिशःकृताः । पान्थेभ्योजलमन्नंचदत्तंतैस्तान्विलोकय
सुगन्धपुष्पमालाभिर्दिव्यचन्दनकर्दमैः । कोटिशस्तोषिता विप्रास्तैस्तानत्र विलोकय॥
अतः परं कदा तेषां विचारोऽपि भविष्यति । तेषां विनिर्गमोवा स्यात्तेषान्तुगणनापिन
परार्धादधितिष्ठन्ति तेषां किं गणनाधुना । तावतां गणना तावत्कल्पान्ते भाविवानवा
एकैकस्य विचारेण पुण्यपापानुयोगतः । कालापनयनं तावत्कालस्यास्य प्रजायते ॥
जलपानार्थमप्यस्य नावकाशः प्रजायते । कालं नयतिं कालोऽयं धर्माधर्मविचारणैः ॥
एतादृशस्य कालस्य शासनार्थं किमुद्यमः । युक्तो भवति येनास्य ताडनं कृतमीदृशम्॥

शिवलिङ्गार्चनं त्यक्तं किमनेनाधुनाप्ययम् । शासनार्हः कथं यूयं शाङ्कराग्रेसराः खलु
पश्य त्रिपुण्ड्रं तत्काले कण्ठे रुद्राक्षमालिकाम् । एतस्यताडनेभीतिश्शाङ्कराद्भवतांनकिम्
शिवलिङ्गार्चकानस्मान्भूतिरुद्राक्षभूषणान्। पश्य व्रणानि चास्माकमङ्गेष्वाघातजान्यपि
अस्मासु दुरदृष्टानि किमद्यपि गणेश्वर । भूतिरुद्राक्षदेहानां दुःखमेतत्कथं मतम् ॥

व्यासः—

इत्युक्त्वा विरता देवाः प्रणिपत्य पुनः पुनः । व्रणपीडितसर्वाङ्गास्तदाघातभयातुराः ॥

यस्यैश्वर्यमपारमक्षतमघानाक्रान्तमन्तं विना
तिष्ठत्यप्रतिमं तमेव शरणं मन्ये कृपासागरम् ।
गौरीचारुपयोधराधरवलीहारावलीकेलिका-
लीलालोलमिहानुवेलमकलं श्रीकालकालं भजे ॥ १२० ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे शिवपूजामहिमा नाम
सप्तविंशोऽध्यायः ॥ २७ ॥

---

## शिवमहिमकथनं नाम अष्टविंशोऽध्यायः

व्यासः—

इति देववचश्श्रुत्वा नन्दिकेशश्शिवं स्मरन् । शिवप्रभावं सस्मार विलक्षणमनामयम् ॥

नन्दिकेश्वरः—

शृणु विष्णो शृणु ब्रह्मञ्शृणु काल शचीपते ।शृण्वन्त्वन्ये सुरगणाःप्रभावंशाम्भवंमुहुः

महेश्वरस्सर्वसुरोत्तमोऽयमनामयोऽयं जगदीश्वरोऽयम् ।
मृत्युञ्जयोऽयं मदनान्तकोऽयं कालान्तकोऽयं मम भागधेयम् ॥ ३ ॥
अस्माकमाराध्यतमं प्रकृष्टं विश्वेश्वरश्रीचरणारविन्दम् ।
आनन्दकन्दं तदिदं प्रमोदं ददातु मन्दं स्मृतमप्यमन्दम् ॥ ४ ॥
वन्दे मुहुर्दैवतसार्वभौमं सोमावतंसं गरलावतंसम् ।
तमेव वेदान्तगणास्स्तुवन्ति तं देवदेवं शरणं प्रपद्ये ॥ ५ ॥

---

१. अस्माकमिति पाठः ।

यदा कदाचिद्धृदयारविन्दे महेश्वरश्रीचरणारविन्दम् ।
क्षणं चरन्तो यदि चिन्तयन्ति तदा कृतान्तस्य पदं न यान्ति ॥ ६ ॥
यः कालकालश्श्रुतिषु प्रसिद्धस्तं कालकालं प्रणमन्ति सन्तः ।
ते तावदन्ते न कृतान्तभीतिं प्रयान्ति यान्त्येव शिवं प्रसन्नम् ॥ ७ ॥
न चायमन्यामरतुल्यरूपो यतो विरूपाक्ष इति प्रसिद्धः ।
को वा विरूपाक्षसमक्षमेति विना विरूपाक्षकटाक्षलेशम् ॥ ८ ॥
धर्मैरपारैरलमेव योगैर्दानैरपारैरलमेव यागैः ।
तपोभिरुग्रैरलमेव तस्मैस्तं कालकालं कलयेऽनुवेलम् ॥ ९ ॥
धर्मोऽपि को वा तदुमासहायस्वरूपदानेऽपि समर्थमेव ।
एकं नवं विल्वदलं शिवाय समर्पितं तत्तुलनां प्रयाति ॥ १० ॥
खण्डानि पत्राण्यपि चन्द्रमौलिश्छिन्नानि पुष्पाण्यपि लीलया वा ।
क्षिप्तानि गृह्णाति शुभं ददाति मुक्तिं ददाति प्रतिभूस्स धर्मे ॥ ११ ॥
किमश्वमेधादिकयागबृन्दैर्न तैश्शिवाराधनपुण्यराशेः ।
लेशोऽस्ति यस्सूक्ष्मतरो नितान्तं तेनापि तुल्या न भवन्ति ते तु ॥ १२ ॥
गोकोटिदानैरपि किं फलं स्यान्न ते शिवाराधनपुण्यराशेः ।
लेशोऽस्ति यस्सूक्ष्मतरो नितान्तं तेनापि तुल्या न भवन्ति ते तु ॥ १३ ॥
[1]किमुत्तमैश्वार्बुददानसङ्घैर्न ते शिवाराधनपुण्यराशेः ।
लेशोऽस्ति यस्सूक्ष्मतरो नितान्तं तेनापि तुल्या न भवन्ति ते तु ॥ १४ ॥
किं काञ्चनाभ्यर्चितकन्यकानां दानैरपारैरनुवारमेव ।
ते लिङ्गपूजाफललेशलेशलेशेन किं तत्तुलनां प्रयान्ति ॥ १५ ॥
सस्यादिसम्पूर्णमहीप्रदानैः किं तैरनन्तैरपि तानि तानि ।
ते लिङ्गपूजाफललेशलेशलेशेन किं तत्तुलनां प्रयान्ति ॥ १६ ॥
वनानि सान्द्राणि विनिर्मितानि किं तान्यनन्तान्यपि सन्ततानि ।
ते लिङ्गपूजाफललेशलेशलेशेन किं तत्तुलनां प्रयान्ति ॥ १७ ॥

१. किमुत्तमाश्वार्बुद इति पाठः ।

किमन्नदानैरमितैर्विचित्रैर्घृतादिकद्रव्यसमन्वितैर्वा ।
ते लिङ्गपूजाफललेशलेशलेशेन किं तत्तुलनां प्रयान्ति ॥ १८ ॥
गोक्षीरपूर्णामृतकुम्भदानैर्धनप्रदानैश्च फलप्रदानैः । ते .... न्ति ॥ १९ ॥
विचित्रवस्त्राभरणार्बुदानां दानैरपारैरुदकुम्भदानैः । ते .... न्ति ॥ २० ॥
सुगन्धपुष्पामलमालिकानां दानैरपारैरपि किं फलं स्यात् । ते .... न्ति ॥ २१ ॥
लिङ्गे प्रदत्तं कुसुमं दलं वा फलं जलं वा तदुमासहायः ।
गृह्णाति तेनैव ददाति भाग्यमनन्तमन्ते स ददाति मुक्तिम् ॥ २२ ॥
दूर्वाङ्कुरैर्वा शिवलिङ्गरूपं सम्पूज्य भक्त्या प्रणमन्ति ये ते ।
तीर्त्वैव संसारमहाम्बुधिं तं प्रयान्ति सन्तः खलु कालकालम् ॥ २३ ॥
लिङ्गे यदल्पं फलमम्बु वान्यद्दत्तं तदेवामितपुण्यहेतुः ।
न तेन तुल्यं जगतीतलेऽस्मिञ्छुभावहं पापविनाशहेतुः ॥ २४ ॥
शिवाय यः प्रत्यहमादरेण दत्वा जलं बिल्वदलानि दद्यात् ।
तत्पुण्यतुल्यं तु न पुण्यमस्ति दृष्टं श्रुतं वा श्रुतिषु प्रसिद्धम् ॥ २५ ॥
शिवाय दद्याद्यदि मुष्टिमात्रं भक्त्या यदन्नं घृतलेशयुक्तम् । तत्पु .... द्धम् ॥ २६ ॥
दीपं महेशाय घृताभिषिक्तं सद्वर्तिकायुक्तमपि प्रदद्यात् । तत्पु .... द्धम् ॥ २७ ॥
धूपं महेशाय घृतेन युक्तं ददाति यः प्रत्यहमादरेण । तत्पु .... द्धम् ॥ २८ ॥
दधिप्रदानं गिरिशाय भक्त्या करोति यः प्रत्यहमादरेण । तत्पु .... द्धम् ॥ २९ ॥
क्षीरप्रदानं गिरिशाय भक्त्या करोति यः प्रत्यहमादरेण । तत्पु .... द्धम् ॥ ३० ॥
घृतप्रदानं गिरिशाय भक्त्या करोति यः प्रत्यहमादरेण । तत्पु .... द्धम् ॥ ३१ ॥
सिताप्रदानं गिरिशाय भक्त्या करोति यः प्रत्यहमादरेण । तत्पु .... द्धम् ॥ ३२ ॥
फलप्रदानानि करोति भक्त्या मृडाय यः प्रत्यहमादरेण । तत्पु .... द्धम् ॥ ३३ ॥
मधुप्रदानानि करोति भक्त्या भवाय यः प्रत्यहमादरेण । तत्पु .... द्धम् ॥ ३४ ॥
ताम्बूलदानं गिरिशाय भक्त्या करोति यः प्रत्यहमादरेण । तत्पु .... द्धम् ॥ ३५ ॥
एलालवङ्गादिकमादरेण ददाति यः प्रत्यहमीश्वराय । तत्पु .... द्धम् ॥ ३६ ॥
ददाति यो दर्पणमादरेण मनोहरं प्रत्यहमीश्वराय । तत्पु .... द्धम् ॥ ३७ ॥

करोति यश्चामरवीजमेन वातप्रसारं गिरिशाय नित्यम् । तत्पु .... द्धम्॥३८॥
छत्रप्रदानं नियमेन नित्यं करोति यस्सर्वसुरोत्तमाय । तत्पु .... द्धम्॥३९॥
ध्वजप्रदानं गिरिशाय नित्यं करोति यस्सर्वसुरोत्तमाय । तत्पु .... द्धम्॥४०॥
नाट्यप्रदानं गिरिशाय नित्यं करोति यस्सर्वसुरोत्तमाय । तत्पु .... द्धम्॥४१॥
तूर्यप्रदानं गिरिशाय नित्यं करोति यस्सर्वसुरोत्तमाय । तत्पु .... द्धम्॥४२॥
सम्मार्जनं शङ्करमन्दिरस्य करोति यस्सर्वसुरोत्तमाय । तत्पु .... द्धम्॥४३॥
दीपावलिं शङ्करमन्दिरेषु करोति यस्सर्वसुरोत्तमाय । तत्पु .... द्धम्॥४४॥
दुकूलदानं गिरिशाय भक्त्या करोति यस्सर्वसुरोत्तमाय । तत्पु .... द्धम्॥४५॥
करोति यः पुष्पविमानदानं भक्त्या महेशाय विशेषकाले। तत्पु .... द्धम्॥४६॥
वसन्तकाले नवचन्दनेन करोति लिङ्गेष्वनुलेपनानि । तत्पु .... द्धम्॥४७॥
दध्यन्नदानेन करोति पूजां नित्यं महेशाय तु सोपदंशम्। तत्पु .... द्धम्॥४८॥
क्षीरान्नदानेन करोति पूजां नित्यम्महेशाय तु सोपदंशम्। तत्पु .... द्धम्॥४९॥
घृतान्नदानेन करोति पूजां नित्यं महेशाय तु सोपदंशम्। तत्पु .... द्धम्॥५०॥
मध्वन्न दानेन करोति पूजां नित्यं महेशाय तु सोपदंशम्। तत्पु .... द्धम्॥५१॥
महेशनैवेद्यविशेषदानैर्यश्शाङ्करं तोषयति प्रयत्नात् । तत्पु .... द्धम्॥५२॥
महेशदत्तैर्वसनैर्धनैर्वा यश्शाङ्करं तोषयति प्रयत्नात् । तत्पु .... द्धम्॥५३॥

किं लिङ्गार्चनपुण्यतुल्यमनघं पुण्यं श्रुतं तत्त्वतः
पुण्यानामपि पुण्यमुत्तमतमं तत्सर्वपुण्यालयम् ।
तन्मृत्युञ्जयतोपकारणमिति ज्ञातं तदेवोत्तमं
तद्वेदान्तशिरोमणिश्रुतिमतः किं तेन तुल्यं सुराः ॥ ५४ ॥

रेरे सुराश्शिवपदाम्बुजपूजनेन तुल्यं न पुण्यमतुलं तदपारपुण्यैः ।
साध्यं तदेव सुकरं करवीरपुष्पैर्दूर्वाङ्कुरैरपि कृतं वितनोति मुक्तिम्॥ ५५॥

विश्वासश्शिवपूजनेऽप्यगणितैः पुण्यैः परं जायते
जातस्याप्यनुवर्तनं बहुतरैः पुण्याब्धिभिर्जायते ।

तत्पूजाकरणेन पुण्यनिचयः प्राप्तास्समस्तास्तदा
कल्याणाम्बुधयोऽप्यपारविभवाः प्राप्ताः परार्धाधिकाः ॥ ५६ ॥
कामं कायविशोषणाय मुनिभिस्तप्तं तपः किं ततो
लिङ्गाराधनमन्तरेण मरणे भागस्य मुक्तेरपि ।
वार्ता नेत्यवधारितं श्रुतिगणैर्लिङ्गार्चनं कामदं
सर्वेषामिति निश्चितं तदितरत्सर्वं तुषान्वेषणम् ॥ ५७ ॥
एकं बिल्वदलं नवं शिथिलमप्यम्लानमत्यल्पम-
प्यत्यल्पं शिवलिङ्गभागनिहितं हन्त्यापदम्भोनिधीन् ।
कल्याणाम्बुधिपंक्तिमप्यनुदिनं तावत्करोत्यन्वहं
मोदाम्बोधिविवर्धनं च वहुधा मुक्तिं तनोत्यन्ततः ॥ ५८ ॥
सत्यं सत्यमिहोच्यते सुरगणास्सत्यं पुनस्सर्वथा-
प्युद्धृत्याशु भुजद्वयं शपथमप्यम्बापदाम्भोरुहे ।
कृत्वा शङ्करचारुचारुचरणाम्भोजेऽपि लिङ्गार्चनं
सर्वाभीष्टदमेव तेन सदृशं पुण्यं न लोकत्रये ॥ ५९ ॥
एतल्लिङ्गसमर्चनं मुनिजनाशास्यं रहस्यं परं
वक्तव्यं शिवपूजनोत्सवरसाविर्भावतुष्टाय तु ।
इष्टायामितपुण्यकीर्तिविभवाकारापहाराय त-
न्नान्यस्मै शिवनिन्दकाय शपथश्शम्भोः प्रभोः पादयोः ॥ ६० ॥

व्यासः—

नन्दीश्वरवचोवीचीपानपीनात्मविग्रहाः । शिवानुग्रहमासाद्यप्रापुरानन्दमद्भुतम् ॥
ततः परमनेनापि दूतानीतेन किं पुरा । पुण्यं कृतं वदास्माभिर्नज्ञातमिति चोचिरे ॥

नन्दिकेश्वरः—

किं वक्तव्यं मयादेवास्त्रिणेत्रस्याद्भुतं खलु । चरित्रं तत्पवित्रं हि पवित्राणां विशेषतः ॥
हरस्यामरवीरस्य रङ्केष्वप्यविशङ्कया । अनुग्रहस्तदुग्राणां परमानन्दसाधनम् ॥६४ ॥
स्वतन्त्रस्समहादेवो यं पश्यति दयार्णवः । तेन तीर्णस्स संसारः पापनक्राकरः खलु ॥

प्रभुचित्तानुसारेण किङ्कराणां तु वर्तनम्। अन्यथा विपरीतं स्यादिति निश्चितमेव हि॥
तदुक्तिरेव वेदार्थो वेदवक्ता स एव हि। प्रामाण्यमपि वेदानां न स्वतः परमार्थतः॥
परं तु शिववाक्यत्वस्वरूपेणेति निश्चितम्। वेदास्तुशिववाक्यानि प्रामाण्यं तेषु सर्वथा
धर्मतत्वं महेशेन ज्ञायते नामरैरपि। किंनरैर्वा न गन्धर्वैर्नराणां तत्र का कथा ॥६९॥
नित्यं सर्वज्ञमूर्तित्वादष्टमूर्तिः परं स्वतः। जानाति तत्वं धर्माणां सर्वेषामपि वस्तुतः॥
अयमेतादृशो धर्मः फलमस्येदमित्यपि। जानाति भगवाञ्छम्भुस्साम्बस्संसारमोचकः॥
तन्मायया परं विश्वं मोहितं तच्चराचरम्। संसारे पातयत्येव पुनः पुनरनेकधा॥७२॥
अहो महेश्वरैश्वर्यमपारमतुलं खलु। तत्केन ज्ञायते लोके वेदैर्न ज्ञायते यतः ॥ ७३ ॥
तदुक्तवचनैर्वेदैस्तद्रूपावगमः कथम्। अस्मदुक्तेन वाक्येन नास्मज्ज्ञानं यथा तथा॥
वेदान्तागोचरं रूपं सच्चिदानन्दलक्षणम्। तदस्माभिः कथं ज्ञेयं दुर्ज्ञेयत्वावधारणात्॥
ये लीलाविग्रहाश्शम्भोस्तेऽप्यनन्तास्तथाविधाः। तज्ज्ञानमप्यशक्यंहिसर्वथैवस्वभावतः
एकैको विग्रहस्तस्य नास्मन्नयनगोचरः। तेजःपुञ्जसमाक्रान्तस्तेजःपुञ्जास्स्वभावतः॥
द्विबाहवो विग्रहास्तु कोटिशः परमात्मनः। तस्यैव कोटिशस्तावत्ते चतुर्बाहवः पराः॥
केचिदष्टभुजास्तस्य केचिच्च दशबाहवः। सहस्रबाहवः केचित्केचित्ते लक्षबाहवः॥
ते कोटिबाहवः केचित्केचिदर्बुदबाहवः। परार्धबाहवः केचिन्महादेवस्य विग्रहाः॥
दिव्याभरणसम्पन्नास्ते सर्वे मेरुसन्निभाः। दुकूलसंवृतास्सर्वे दिव्यचन्दनचर्चिताः॥
उमार्धविग्रहास्सर्वे त्रिशूलवरबाहवः। ते सर्वे चन्द्ररेखाङ्का नीलकण्ठाः कपर्दिनः॥
कैलासभुवनागारं व्याप्य सर्वे व्यवस्थिताः। परमानन्दसम्पूर्णास्ते सर्वेऽपि कृपार्णवाः॥
तत्प्रभावार्णवान्तस्तु न वेदैरपि दृश्यते। तज्ज्ञानमस्मदादीनां सुतरामपि दुर्लभम्॥
एतेषां विग्रहाणां तु सर्वेषां मूलविग्रहः। चिद्घनश्शिव एवेति तज्ज्ञानमतिदुर्लभम्॥
तत्र द्विबाहुरीशानविग्रहो दृश्यते मया। कथञ्चिद्घोरतपसा कृपयापि शिवस्य मे॥
शिवया स यदा युक्तस्तदा तद्दर्शनं परम्। कुमारस्य गणेशस्य तदन्येषां तु दुर्लभम्॥
स विहारार्थमायाति यदा बहिरुमां विना। तदा स करुणापूरो हरो लोचनगोचरः॥
तस्यैव लीलया सृष्टिस्स्थितिस्संहार इत्यपि। स कथञ्चिद्वेदवाक्यैर्विरूपाक्षो निरूपितः॥
तदाज्ञावशगं सर्वमिदं ब्रह्माण्डमण्डलम्। वाति वातस्ततो भीतश्शङ्करादुग्रशासनात्॥

उग्रोग्रशासनादेवभीतस्सूर्योऽप्युदेत्ययम् । भीषास्मादग्निरिन्द्रश्च मृत्युर्धावतिपञ्चमः ॥
एतादृशं महादेवं सर्वश्रुत्यन्तसंस्तुतम् । स्मृत्वापि मुच्यते घोरैरपारैरघसागरैः॥९२ ॥
अर्चनं स्मरणं ध्यानं वन्दनं कीर्तनं तथा । जपोऽपि शिवलिङ्गाग्रे शिवस्यानन्तमुच्यते
शिवचरणसरोजाभ्यर्चनध्यानदानस्मरणभजनगानाराधनालापनाद्यैः ।
अनुपदमनुधावन्त्यादरादिन्दिराद्याः कनकरुचिरदण्डाखण्डचण्डातपत्रैः॥ ९४ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे शिवमहिमकथनं नाम अष्टाविंशोऽध्यायः ॥ २८ ॥

---

## शिवधर्मकथनं नाम एकोनत्रिंशोऽध्यायः.

व्यासः—

ततः परं सुरास्सर्वे प्रणताः प्रीतिपूर्वकम् । शिवधर्माकर्णनार्थमुद्युक्ताः प्रीतिपूर्वकम् ॥
ततः कृताञ्जलिपुटास्सुरास्ते नतकन्धराः । शिवधर्मान्वदस्वेति तं मुहुर्मुहुरानताः ॥
सुराणां गिरमाकर्ण्य स धीरो नन्दिकेश्वरः। शिवधर्ममणिश्रेणीभूषणः प्राहतान्सुरान्॥

नन्दिकेश्वरः—

नानाधर्मफलापाररसश्शङ्करपूजनम् । न तस्मादधिकं पुण्यं श्रुतं स्वर्गापवर्गदम् ॥
शिवपूजनमेवैतद्बहुधा श्रुतिकीर्तितम् । तत्कीर्तनेन वेदाश्च पावना इति कीर्तिताः ॥
शिवध्यानपरा पूजा शङ्करस्य महात्मनः। तेन ध्यानेन मुच्यन्ते संसारादघसागरात् ॥
हिरण्यबाहुरित्यादिश्रुतिकोटिप्रतिश्रुतम् । स्वरूपं शङ्करस्येदं ध्येयं मोहं विना मुहुः॥
मुहुर्मुहुरुमाकान्तं नितान्तं शान्तविग्रहम् । ध्यात्वाध्यानप्रभावेनमुच्यतेभवबन्धनात्॥
बहुजन्मार्जितैः पुण्यैः भवे भक्तिः प्रजायते। तया भक्त्या महादेवं ध्यात्वामुक्तोभवेन्नरः
सा भक्तिर्दुर्लभा लोके तपसाप्यमरास्ततः। शङ्करानुग्रहादेव सा भक्तिर्भवति ध्रुवम् ॥
श्रुत्युक्तेन प्रकारेण ध्यात्वा लिङ्गे सदाशिवम्। पूजा कार्या प्रयत्नेन प्रत्यहं प्रीतिपूर्वकम्
बिल्वैः प्रसूनैर्दर्भैर्वा नवदूर्वाङ्कुरैरपि । नीरैर्वा पूजयेल्लिङ्गं सर्वमङ्गलदायकम् ॥ १२॥
भस्मनोद्धूल्य सर्वाङ्गं कृत्वा रुद्राक्षधारणम् । शिवलिङ्गमुपस्पृश्य चरं वाचरमेव वा ॥
सद्योजातादिभिर्मन्त्रैरावाह्य गिरिजापतिम्। रुद्राध्यायेन सूक्तैश्च रौद्रैरीशाभिषेचनम्॥

गोक्षीरदधिमध्वाज्यैश्शर्कराफलसंयुतैः । जलैश्चशीतलैर्धारामविच्छिन्नां प्रकल्पयेत् ॥
ततो विभूतिं दत्वा तु दद्याच्चन्दनमादरात् । ततो बिल्वदलं दद्यादक्षतानपि सादरम् ॥
ततो धूपञ्च दीपञ्च नैवेद्यं च मनोहरम् । पानीयं चाथ ताम्बूलमेलाकर्पूरसंयुतम् ॥
लवङ्गादियुतं दद्याद्दुकूलं च ततः परम् । पश्चादाभरणं दद्यादीपनीराजनं ततः ॥
दर्पणं चामरं छत्रं व्यजनं च ततः परम् । दत्वा प्रणम्य बहुधा नाट्यमीशाय कल्पयेत् ॥
पुनर्जलं गन्धयुक्तं शीतलं च मनोहरम् । दत्वा धूपं च दीपञ्च कर्पूरेण मनोहरम् ॥
पश्चाद्गुरूपदिष्टेन मार्गेणाधिष्ठितासनः । पञ्चाक्षरजपं कृत्वा शाङ्करान्भोजयेत्ततः ॥
स्वयं च शिवनैवेद्यं भुक्त्वा मौनपुरस्सरम् । ततश्शिवकथांपुण्यांवाचयित्वापुनश्शिवाम्
पुनराराधनं कुर्यादुक्तमार्गेण सादरम् । एवं कृत्वा पुनः पूजां मध्यरात्रे पुनःपुनः ॥
ततश्शयनसामग्रींसङ्कल्प्यशिवयोस्स्वयम् । कृत्वाशयनमीशानंस्मृत्वोत्थायार्चयेत्पुनः॥
एवमामरणं कुर्यात्सदोपनयनोत्तरम् । इदं नित्यं ब्राह्मणानां राज्ञां वैश्यस्य चामराः ॥
सुराणां च विशेषेण मुनीनामप्यनुक्षणम् । शिवार्चनं परो धर्मः किन्नराणां विशेषतः ॥
गन्धर्वाणाञ्च सर्पाणां सिद्धानां च विशेषतः । नारीणांचपरोधर्मश्शिवपूजनमास्तिकाः
शूद्राणामितरेषां च लौकिकं शिवपूजनम् । शिवार्चनं विना भुक्त्वा दरिद्रो भवति ध्रुवम्
अन्ते नरकमाप्नोति शिवार्चनविवर्जितः । संसारबन्धनान्मुक्तो न भवत्येव सर्वथा ॥
संसारसागरेमग्नश्शिवपूजनलक्षणम् । आधारं दुर्लभं प्राप्य समुत्तिष्ठति मानवः ॥
संसारबन्धविच्छेदश्शिवार्चनमहासिभिः । तद्विच्छेदकमन्यत्तु दृश्यते न जगत्त्रये ॥
जायन्ते बहवस्तावन्म्रियन्ते चपुनःपुनः । शिवार्चनविहीनास्ते जन्मकोटिषुदुःखिताः
ते गर्भनरकावासा ये शर्वानर्चका नराः । सूकराणां च तेषां च विशेषस्तु न सर्वथा ॥
मलाशनं यतस्तेषां तेषामप्यविशेषतः । तेऽपि सूकरगर्भेषु जायन्ते च पुनः पुनः ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । अपारवेदराशिस्थवेदवेदान्तपारगाः ॥ ३५ ॥
पुराकश्चिदभूद्विप्रो धनधान्यसमन्वितः । पूर्वार्जितेन पुण्येन पुत्रपौत्रादिसंयुतः ॥
स भुंक्तेविपुलान्भोगाञ्छिवानर्चनतत्परैः । असंख्यातैस्सहात्यन्तंनाट्यगानरतस्सदा ॥
ददातितेभ्योवित्तानि बहूनि विविधान्यपि । रत्नानितेनदत्तानिदुकूलान्यपिकोटिशः ॥
अशाङ्करैस्सह प्रीतिस्तेभ्यो दत्तं धनं बहु । गावस्सहस्रशो दत्तास्तेभ्य एव दुरात्मना ॥

महिषीणां सहस्राणितेभ्योदत्तानिकोटिशः । अश्वाश्च दत्तास्तेनैववलीवर्दाश्च कोटिशः॥
अन्नानां राशयोदत्तास्तेभ्यएवप्रयत्नतः । अशाम्भवैस्सहावासस्सल्लापो भोजनं शयः॥
अशाम्भवं मन्दिरं च तस्यभातिस्मशानवत् । न तस्य मन्दिरेशैवश्शिवलिङ्गं मनोहरम्
तच्चाण्डालस्मशानेन तुल्यमित्यवगम्यताम् । यन्नशाङ्करसङ्कीर्णं मल्लिङ्गेन विवर्जितम्॥
शिवलिङ्गविहीनस्य मन्दिरे यदि मोहतः। निवसेत्सोऽपिचण्डालःप्रतिजन्मनिजायते
अशाम्भवोदकं पीत्वा मूत्रप्रायं प्रयत्नतः । मूत्रकुण्डे पतत्येव जन्मकोटिषु मानवः ॥
अशाम्भवान्नं मोहेन यो भुंक्ते मोहतोऽपि वा । स तप्तमलकुण्डेषु पतत्यपि नसंशयः॥
अशाम्भवैस्सहप्रीतिं भोजनाद्यैःकरोतियः। सचण्डालत्वमासाद्यविष्ठायांजायतेक्रिमिः॥
महापातकिसंसर्गो वरं स्वर्गविनाशकः । अशाङ्करैस्सहावासो न वरं दुःखसाधनम् ॥
चण्डालैरपि संवासो यद्यापदि तदा वरम् । सतावत्स्वर्गमार्गस्य सर्वथाननिवारकः॥
भोगस्स्वर्गापवर्गाणामशाम्भवकुलान्वये । दूरे कथा प्रत्युतात्र परत्रापि महद्भयम् ॥
स तादृशो मृतो दैवात्सकलत्रोऽग्निमापसः । तेन भुक्तानि घोराणि नरकाणि पुनःपुनः॥
यैर्यैस्तस्य धनं प्राप्तं तस्य मित्राणि यानिच। तैस्सहानन्त्यघोरेषु नरकेषु स्थितःखलु ॥
स सारमेयजन्मानि भुक्त्वा भुक्त्वा सहस्रशः। पिशाचरूपतांप्राप्तोवनेजलविवर्जिते ॥
तत्रार्तः क्षुधया सोऽपि तृषार्तोऽप्यनुवासरम् । दुःखेनकालनयनं कृतं तेन दुरात्मना ॥
एतादृशाः पिशाचास्तु विपिनं समुपाश्रिताः। तृषार्ताश्चक्षुधातर्ताश्चदग्धाश्चजाठराग्निना॥
तदाक्रोशैर्वनं व्याप्तं मृगैर्भीतैस्सहस्रधा । तैश्शब्दैः कर्णशस्त्राभैर्वनं त्यक्तमनन्तधा ॥
तस्मिन्वने मनोज्ञानि फलानि विविधान्यपि । तैर्नदृष्टानि रम्याणि जलान्यपि विशेषतः
तैर्नदीपश्शङ्कराय दत्तश्शङ्करमन्दिरे । तेन पापेन ते सर्वेऽप्यन्धास्सर्वात्मना सुराः ॥
यैश्च दीपो महेशाय न दत्तो भक्तिपूर्वकम्। तेतु सर्वेऽपिजात्यन्धाभवन्त्येवनसंशयः॥
यैर्न दत्तं महेशाय शीतलं जलमुत्तमम् । ते तृषार्ता न पश्यन्तिजलञ्चनिकटेस्थितम् ॥
यैर्न दत्तं महेशाय चन्दनं च मनोहरम् । ते दुर्गन्धसमाक्रान्ततनवोऽपि भवन्ति हि॥
यैर्न दत्तं महेशाय वसनं प्रीतिपूर्वकम् । ते तु न प्राप्नुवन्त्येव वसनानि विशेषतः ॥
यैर्न दत्तं महेशाय नैवेद्यं रससंयुतम्। ते तु न प्राप्नुवन्त्यन्नं न पश्यन्त्यपि दूरतः ॥
यैर्मन्दिरम्महेशाय न कृतं भक्तिपूर्वकम्। तेतु न प्राप्नुवन्त्येव सदनं सर्वथासुराः ॥

रुचिराणि मनोज्ञानि पवित्राणिफलानिवा । जलानिवामहेशायदत्वाकामानवाप्नुयात्॥
जलं चुलुकमात्रं वायोदद्याद्गिरिशायसः। ऊषरेऽपिजलंप्राप्नोत्यतिग्रीष्मेऽप्यसंशयम्॥
जलं दत्वाशङ्कराय तद्दत्वा शाम्भवायच । सुधासागरमासाद्यमोदन्तेमनुजास्सुराः॥
दुग्धं दत्वा महेशाय तद्दत्वाशाम्भवाय च। क्षीरसागरमासाद्य मोदन्ते मनुजास्सुराः॥
अन्नं दत्वा शङ्कराय तद्दत्वाशाङ्कराय च। अन्नपर्वतमासाद्य मोदन्ते मनुजास्सुराः॥
दधि दत्वा महेशाय तद्दत्वाशाम्भवाय च। दधिसागरमासाद्य मोदन्तेमनुजास्सुराः॥
घृतं दत्वा महेशाय तद्दत्वा शाम्भवायच। घृतसागरमासाद्य मोदन्ते मनुजास्सुराः॥
शिवाय शर्करां दत्वा तद्दत्वा शाम्भवायच। शर्करागिरिमासाद्य मोदन्तेमनुजास्सुराः॥
फलं दत्वा महेशाय तद्दत्वा शाम्भवायच। फलपर्वतमासाद्य मोदन्ते मनुजास्सुराः॥
शिवाय चन्दनं दत्वा तद्दत्वा शाम्भवायच। चन्दनह्रदमासाद्य मोदन्तेमनुजास्सुराः॥
शिवाय कुसुमं दत्वा तद्दत्वाशाम्भवाय च। कुसुमाचलमासाद्य मोदन्ते मनुजास्सुराः॥
शिवाय वसनं दत्वा तद्दत्वा शाम्भवायच। वसनाचलमासाद्यमोदन्ते मनुजास्सुराः॥
शिवायाभरणं दत्वातद्दत्वा शाम्भवायच। भूषणाचलमासाद्य मोदन्तेमनुजास्सुराः॥
दत्वासुवर्णमीशायतद्दत्वा शाम्भवाय च। सुवर्णाचलमासाद्य मोदन्ते मनुजास्सुराः॥
दत्वा छत्रं महेशाय तद्दत्वा शाम्भवाय च। रत्नछत्रसमाकीर्णः प्रयातिशिवमन्दिरम्॥
शिवाय चामरं दत्वा तद्दत्वा शाम्भवायच। रत्नचामरसङ्कीर्णः प्रयाति शिवमन्दिरम्
शिवाय वाहनं दत्वा तद्दत्वा शाम्भवायच। रत्नपुष्पकमासाद्य प्रयाति शिवमन्दिरम्॥
यद्यद्द्रव्यं महेशाय तद्दत्वा शाम्भवाय च। सर्वसौभाग्यसम्पन्नश्शिवलोकमवाप्नुयात्॥
अशाम्भवाय दत्तानि मेरुतुल्यधनान्यपि। व्यर्थानि तानिसर्वाणिचोरनीतसमानिहि॥
अशाम्भवाश्च चोराश्च पुल्कसाश्च समास्सुराः। ततो नते दानपात्रमपात्रत्वमतश्श्रिताः॥
अतस्तेन धनं प्राप्याप्यभाग्येन दुरात्मना। अशाम्भवेभ्यस्तद्दत्तं तेन दुःखमवापसः॥
तत्तुल्यास्तेवनेतस्मिन्मिलिताश्चपरस्परम्।मुहुराक्रोशनङ्कृत्वासनिन्दावचनैस्स्थिताः॥
आक्रोशत्सु वने तेषु सा बभूवाशरीरवाक्।

अशरीरिणी—

अशाम्भवीगतिरियंकिमत्राक्रोशनैः फलम्। अहो गतं धनंव्यर्थमशैवेभ्योऽतिमोहतः॥

१. अशैवानां गतिरिति पाठः।

दत्तं पात्रत्वबुद्ध्यापि नापात्रत्वं विनिश्चितम् । ऊषरे प्रदरे गर्ते पुरीषेऽप्यतिपातितम्॥
यथा वृथा तथा जातमशैवेष्वपितद्धनम् । आक्रोशमपिकुर्वन्ति सर्वास्ता धनदेवताः॥
अशैवाधीनतां प्राप्तास्तेन कष्टं गता इति । अधर्मप्रवणं जातमशैवजनसङ्गमात् ॥९०॥
धनं सर्वं गतं व्यर्थं तेभ्यो दत्तमसंशयम्। जन्ममध्येकदाचिद्वा जलं वा शाम्भवाय किम्
न दत्तं तेन पापेन पिशाचत्वमुपागताः । न दत्तं शाम्भवायान्नं शुष्कं वा मोहतोऽपिवा
अतोवनेपिशाचत्वंभवद्भिः प्राप्तमीदृशम् । न दत्तं वसनं वापि शाम्भवाय महात्मने ॥
तेन पापेन सम्प्राप्तं पिशाचत्वं भवादृशैः । अशाम्भवकथासक्तैर्नश्रुता शाम्भवी कथा ॥
तेन पापेन सम्प्राप्तं पिशाचत्वं महावने । न दत्ता दीपमालापि महादेवस्य मन्दिरे ॥
तेन पापेन सम्प्राप्तं पिशाचत्वं महावने । अन्यदत्तापि दीपानां माला नैवावलोकिता॥
तेन पापेन सम्प्राप्तं पिशाचत्वं महावने । पूजनं न कृतं भक्त्या शम्भोश्शैवस्य वा मुदा॥
तेन पापेन सम्प्राप्तं पिशाचत्वं महावने । न कृतं मन्दिरं शम्भोर्धने सत्यपि मोहतः॥९८
तेन पापेन सम्प्राप्तं पिशाचत्वं महावने । शिवक्षेत्राटनोद्योगो न कृतः पापयोगतः ॥
तेन पापेन सम्प्राप्तं पिशाचत्वं महावने । न दत्तं शिवलिङ्गेषु पत्रं वा पुष्पमेव वा ॥
तेन पापेन सम्प्राप्तं पिशाचत्वं महावने । ग्रीष्मकाले नीरधारा लिङ्गेषु न कृता मुदा ॥
तेन पापेन सम्प्राप्तं पिशाचत्वं महावने ।लिङ्गे परिमलद्रव्यं चन्दनं चार्पितं न हि ॥
तेन पापेन सम्प्राप्तं पिशाचत्वं महावने । वाणी न मधुराप्युक्ता शाम्भवाय मनोहरा॥
तेन पापेन सम्प्राप्तं पिशाचत्वं महावने॥ १०४ ॥

नन्दिकेश्वरः—
इति वाणीं मुहुश्श्रुत्वा शिरस्ताडनपूर्वकम् । परस्परं महीपृष्ठे पतिताश्चुक्रुशुः परम् ॥
तदानीमागतः कोऽपि शाङ्करस्तद्वनं प्रति । बिल्वपत्रार्थमुद्युक्तस्तां शुश्राव गिरं तदा॥
ततो बिल्वान्युपादायसत्वरंमन्दिरंययौ। तामुवाच गिरंतेभ्यस्स्वकीयेभ्योऽतिविस्मितः
तद्ग्रामवासिनस्सर्वे श्रुत्वा विस्मयमागताः।तदाप्रभृति सर्वेऽपि शाङ्करत्वमुपागताः ॥
ततः कश्चिन्मृतस्तत्र ग्रामे भस्मविभूषणः। तदानीमागताश्शम्भोर्दूतास्तं नेतुमादरात्॥
स तस्मिन्नेव दिवसे भक्त्या भस्मविभूषणः। श्रुत्वा वार्तां तदुक्तां तामशैवत्वं जहौ तदा॥
तदुक्तवार्ताश्रवणादनुतप्तः प्रतिक्षणम्। वृद्धेनातःपरं कार्यं किमित्यत्यन्तदुःखितः ॥

वृद्धः—
मरणावसरे सेयं श्रुता वार्ता शुभावहा। अतःपरं पूजने च लिङ्गे शक्तिः कथं भवेत् ॥

श्रुता शिवकथा कापि न पुरा पापनाशिनी । अतःपरं तु वृद्धेन किंकर्तव्यं शिवार्चनम्
शैवो न कोऽप्यागतोऽपि भोजितोऽपि न भक्तितः।पापग्रामनिवासेनपापमेवार्जितं मया॥
धिग्धिग्धिग्धिगयं ग्रामश्शिवलिङ्गविवर्जितः।अशाम्भवजनाक्रान्तश्शिवभस्मविवर्जितः॥
धिग्धिग्धिग्धिगिदं वेश्म शिवभक्तिविवर्जितम् । धनं धान्यंगवांबृन्दं दुकूलानां कुलंतथा
अशैवभुक्तमेतावदशैवपरिवेष्टितम् । इदानीमपि दानार्थं शाम्भवो नात्र सर्वथा ॥
परमान्नेन साज्येन पक्वान्नैर्विविधैरपि । शाङ्करो भोजितो नात्र गृहे धिग्धिग्धनं गृहम्॥

नन्दिकेश्वरः—

इति प्रलप्य बहुधा भोशम्भो पाहि मामिति । उद्धूल्य भस्मनाङ्गानि लौकिकेन मृतस्ततः
नीत्वा दग्धो मृतस्तावत्तत्पुत्रैरपि तादृशैः । ततस्समागतं सर्वैस्स्वगृहं प्रति विस्मितैः॥
ततस्तद्दहनोद्भूतो धूमस्तद्वनसङ्गतः । आक्रान्तास्तेन धूमेन पिशाचास्तद्वनाश्रिताः ॥
ततस्तद्धूमसङ्गेन ते सर्वे गतकल्मषाः । शिवलोकमनुप्राप्ताः पुष्पकेषु स्थितास्सुराः ॥
सह तेनापि वृद्धेन शिववार्तासमुत्सुकाः । प्रशंसां शाङ्करस्यैव शृण्वन्तः पुनरादरात् ॥
अतो महेशमहिमा महानेव महात्मनाम् । महानन्दकरो नित्यं महापातकनाशकः ॥
यस्यानुतापमात्रेण मुक्तिरासीन्मरुद्गणाः । तद्धूमसङ्गान्मुक्तास्ते पिशाचाश्चापि पापिनः
एतावतापि भगवान्महादेवः कृपानिधिः । ददाति स्थानमुत्कृष्टं योगिनामपि दुर्लभम्॥
अघोरनरकावासं कृत्वा कल्पशतेष्वपि । पिशाचत्वमनुप्राप्य मुक्तास्तद्धूमसङ्गमात् ॥
सोऽपि किं शाम्भवः किन्तु पतिताग्रेसरो यतः। कदापि नकृतं तेन महादेवस्य पूजनम्
पूजितं शिवलिङ्गञ्च न दृष्टं तेन सर्वथा । न दृष्टश्शाम्भवस्तेन तत्सङ्गस्तस्य दूरतः ॥
मरणाभिमुखो वृद्धस्सोऽनुतापेन केवलम् । मृतो भस्मकणाक्रान्तस्तस्य सागतिरुत्तमा

यं ध्यात्वा मुनयः कदाप्यविरतास्स्तुत्वा च वेदाः परं
नत्वा देवगणाः कलत्रसहिताः पुत्रैस्स्वमित्रैर्युताः ।
तं देवोत्तममाकलय्य मनसा स्मृत्वा क्षणं वा क्षणे-
स्सम्पूर्णाः क्षणदाधिपार्धकलया कामं मुदं प्राप्नुयुः ॥ १३१ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे शिवधर्मकथनं नाम
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## शिवभक्तमहिमकथनं नाम त्रिंशोऽध्यायः.

देवाः—

आज्ञापयास्मान्भगवन्नस्माकमपि शङ्करः। आराध्यस्तत्पदाम्भोजस्मरणंक्रियते सदा
तस्यैवानुचरास्सर्वे तदाज्ञाकारिणस्सदा। तंविनागतिरस्माकमन्योनास्तीति निश्चितम्
तत्पादस्मरणेनैव नीयन्ते दिवसाः खलु। जीवनं तावदस्माकं स्मृतं तच्चरणाम्बुजम्॥
भवदुक्तकथाधारासुधापानेन मन्मनः। पीनं दिनेदिने वृद्धिं प्रयास्यति न संशयः॥
स्वामिन्न गणितं द्रव्यमेतैर्दत्तं दुरात्मभिः। अशाम्भवेभ्यः का तेषां भवित्री[1] गतिर्वद
किंतु तद्दानयात्रत्वं ये गतास्तेऽप्यशाम्भवाः।तेषां का वा गतिस्स्यात्तु दुर्ज्ञेयाखलुमादृशैः
सहस्रयोजनायामं सङ्कीर्णं यमनन्दिरम्। अशैवैरेव ते तावदुदाराधनदानतः॥ ७॥
धनवृष्टिः कृता तैस्तु ब्राह्मणेभ्यः परं तु तैः। अशाम्भवास्तावतापि तद्दत्तं तद्वृथा गतम्
यागादिकानां तद्धर्मनिरतास्ते तथापि ते। अशाम्भवास्ततस्तेषां गतिः कावा भवेद्वद॥
शिवालयविहीनेषु देशेषु स्थितमादरात्। अशैवधर्ममाश्रित्य धर्मान्तरपरायणाः॥१०
एतादृशानां सर्वेषां विचारार्थमयं यमः। प्रवृत्तस्तेन कालोऽस्य भूयानेव भविष्यति॥
एतादृशविचारेण क्षीणमायुः क्षणेक्षणे। एतस्य शिवपूजापि त्वरया सम्प्रजायते॥१२
तेन तेन विचारेण दुःखितस्सर्वदा यमः। तद्दुःखशमनोपायं नन्दिकेश वदाधुना॥

नन्दिकेश्वरः—

तुषखण्डनकल्पस्यविचारस्यास्तिकिंफलम्। अशाम्भवाःपातनीयाःकुम्भीपाकेषुयत्नतः
अशाम्भवकृतान्धर्मानधर्मानिति संस्मर। चण्डालैःकिंकृतोयागस्स्वर्गायस्वर्गसाधनः॥
यदि पुल्कसनारीभिर्वेदस्याध्ययनं कृतम्। तेनाध्ययनजं पुण्यं तासु सम्भावितं च न॥
अतस्सर्वेपातनीयाः कुम्भीपाकेषु ते यम। आकल्पंतेषु ते स्थित्वाप्रयास्यन्तिपिशाचताम्
अतःपरं पूजनीयान्वदामि बहुधा परम्। शृणुध्वं सावधानेन शिवभक्तान्विशेषतः॥
हे विश्वनाथ मदनान्तक कालकाल गौरीपते गिरिश चन्द्रकलावतंस।
शैलेन्द्रजाहृदयपङ्कजराजहंस पाहीति यो वदति तं शिवभक्तमाहुः॥ १९॥
काशीपते हर भवामरसार्वभौम भीम स्मरान्धकरिपो गिरिश त्रिणेत्र।

१. कुगतिरिति पाठः।

भो भूतिगात्र वृषभाधिप भद्रगात्र पाहीति यो वदति तं शिवभक्तमाहुः ॥२०॥
विश्वेश्वर त्रिदशनायक चन्द्रमौले लीलातिलोल विकटाघटितार्धदेह ।
सिद्धेश्वरीरमण चन्द्रपते मुहुर्मां पाहीति यो वदति तं शिवभक्तमाहुः ॥ २१ ॥
भो सङ्कटारमण शूलकर स्मरारे श्रीशीतलारमण भो कलशेश शम्भो ।
ज्योतिस्स्वरूप भगवन्मणिकर्णिकेश पाहीति यो वदति तं शिवभक्तमाहुः॥२२
पुण्याविमुक्त परमेश्वर नन्दिकेश श्रीमन्महेश्वर सुवर्णपिनाकपाणे ।
श्रीकालकूटविषनीलतरार्धकण्ठ पाहीति यो वदति तं शिवभक्तमाहुः ॥ २३ ॥
उद्धूलनातिरुचिराङ्गलसात्त्रिपुण्ड्र रेखाललाटफलकान्धकमर्दकेश ।
आमर्दकेश्वर महाघविनाशकेश पाहीति यो वदति तं शिवभक्तमाहुः ॥ २४ ॥
श्रीवृद्धकाल वृषभध्वज कृत्तिवासाश्श्रीलिङ्ग लिङ्गनिलयाव्यय मृत्युमृत्यो ।
श्रीवक्रतुण्ड गणनायक डुण्डिराज पाहीति यो वदति तं शिवभक्तमाहुः ॥२५॥
केदारनायक सदाशिव सोमनाथ ज्ञानेश दक्षहर नायक दक्षनाथ ।
सिद्धेश धर्मगणनायक चण्डिकेश पाहीति यो वदति तं शिवभक्तमाहुः ॥२६॥
एतादृशास्सन्ततमर्चनीयास्सुरैरपारैरपि किन्नराद्यैः ।
तत्पूजया पूजित एव नूनं गौरीसहायस्समयो ममायम् ॥ २७ ॥
लिङ्गं विलोक्य सहसा प्रणतः फलं वा पर्णञ्च नीरमसकृत्प्रयतः प्रदद्यात् ।
रुद्राक्षभस्मकणभूषितपुण्यदेहो देहावसानमधिगत्य शिवं प्रयाति ॥ २८ ॥
एतादृशानतिनिगूढशिवार्चनादिद्रव्यानपारगुणसागरसागरांस्तु ।
दूराद्विलोक्य मुहुरादरतोऽपि नत्वा तुष्टा भवन्ति मुनयोऽपि गणाश्च सिद्धाः ॥
येनार्चितं सकृदुमापतिलिङ्गमेकं तेनाशु शोकजलधिः खलु तीर्ण एव ।
तूर्णं प्रयाति गिरिजारमणं स तावद्धन्यस्सतामनुदिनं सुकृतार्णवत्वात् ॥ ३० ॥
आकर्णिता शिवकथा क्षणदा क्षणं वा प्रक्षीणपातकमहाम्बुधिरेव सोऽपि ।
तत्पूजनेन गिरिजारमणोऽतितुष्टः कष्टानि नाशयति सत्यमिदं मयोक्तम् ॥३१॥
यः पश्यति स्मरहरप्रियलिङ्गपूजां भक्त्या प्रमोदमुपयाति विलोकनेन ।
रोमाञ्चचिह्नितवपुस्स्मृतचन्द्रमौलिस्तं शाम्भवं विदुरघाम्बुधिनाशहेतुम् ॥३२॥

तं पुण्यकृत्तमवरेण्यमिति स्मरामि यः कालकालचरणाम्बुजभक्तियुक्तः ।
युक्तस्स योगनियमादिभिरित्यवैमि तस्मान्नकोऽपि भुवनेष्वधिको नरेषु ॥३३॥
एतादृशास्सन्ततमर्चनीयास्सुरैरपारैरपि किन्नराद्यैः ।
तत्पूजया पूजित एव नूनं गौरीसहायस्समयो ममायम् ॥ ३४ ॥
यः प्रातरिन्दुशकलाभरणार्चनेन प्रीतस्स्मरन्स्स्मरहरं फलपुष्पदानैः ।
तं पूजयन्ति मुनयोऽपि मुहुस्स धन्यो मान्योऽस्मदादिभिरिति प्रणमन्ति धीराः
ये शङ्करार्दनपराशिव कालकाल मन्नाथ मज्जनक मे परमात्मबन्धो ।
मत्प्राणरक्षक महेश्वर मामवाव न त्वां विना गतिरिति प्रवदन्ति शैवाः ॥३६॥
दारास्तवैव तनयास्तव चन्द्रमौले धान्यं तवैव धनमश्वगवादयोऽपि ।
सर्वं त्वमेव तव सर्वमिति स्मरन्तस्संसारभीतिमपहाय शिवं प्रयान्ति ॥ ३७ ॥
धन्यं मनश्शिवपदस्मरणानुरक्तं धन्यं विशालनयनाम्बुजजीवनं च ।
तल्लिङ्गपूजनविलोकनलोलमेव तस्मात्किमन्यदधिकं भुवि धन्यमस्ति ॥ ३८ ॥
धन्यौ त्वदीयचरणौ शिवतीर्थयात्रापूतौ करौ च शिवपूजनसाधनत्वात् ।
धन्यं शिरश्शिवनतिप्रवणं क्षणं वा तस्मात्किमन्यदधिकं भुवि धन्यमस्ति ॥३९
धन्या हि तस्य जननी जनकोऽपि धन्यो धन्यं कुलं च रमणी तनयाश्च भृत्याः
दास्यश्च तस्य शिवलिङ्गसमर्चनेन सद्यः प्रसन्नमपि मानसमित्यवैमि ॥ ४० ॥
उन्मत्तवद्ददति शङ्करनाम दृष्ट्वा लिङ्गार्चनं कुसुमचन्दनधूपदीपैः ।
पक्वान्नराशिभिरमन्दमुदा य एव तत्पादुकास्मरणमप्यघनाशकं हि ॥ ४१ ॥
यः कश्चिदेव भुवनेष्वमितप्रभावो भावो न भावसदृशो भुवनत्रयेऽपि ।
भावस्य भावभयलेशविहीनवृत्तेर्भूयो भवो न भवतीति भवोऽपि मेने ॥ ४२ ॥
संसारभारपरिहारविहारहारहारोपहारपरमादरमादरेण ।
दूरादनादरमपास्य नमन्ति दारैर्धीराश्च किन्नरवरास्सह ते कुमारैः ॥ ४३ ॥
किं वर्णयामि शिवभक्तजनप्रभावं गौरीपतिप्रियतमश्शिवभक्त एव ।
तं पुण्यपुञ्जमजपूज्यतमं विदित्वा तत्पूजनाय नियतो भव नित्यमेव ॥ ४४ ॥
ये शङ्करस्मरणमात्रपवित्रगात्रास्तांस्त्वं त्रिणेत्रनिलयान्यम पश्यपश्य ।

तन्मन्दिरेषु गमनं न तवापि युक्तं तत्पूजनार्थमपि तत्वमिदं वदामि ॥ ४५ ॥
श्रुत्युक्तसिद्धसितभस्मपवित्रगात्रांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
रुद्राक्षभूषणविभूषितपुण्यदेहांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
श्रीबिल्वपत्रशिवलिङ्गसमर्चनार्थास्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
श्रीशैलनायकसमर्चनपूतचित्तांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
श्रीकालहस्तिपरिपूजनसक्तचित्तांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
एकाम्रनायकविलोकनपूतचित्तांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
ईड्यारुणाचलविलोकनलोलदक्षांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
श्रीमच्चिदम्बरविलोकनसक्तचित्तांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
मध्यार्जुनेश्वरविलोकनसक्तचित्तांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
श्रीकुम्भघोणपतिपूजनसक्तचित्तांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
श्रीनन्दिमङ्गलविलोकनसक्तचित्तांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
भूतिंविचिन्त्यसततंभ्रमराम्बिकायास्तुष्टाभवन्तिसुकृतैरमितैर्यमातः । त .... मि ॥
श्रीचन्द्रलाचरणपूजनसक्तचित्तांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
तीर्थेशलिङ्गनियमार्चनसक्तचित्तांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
काशीप्रदेशवशमानसपुण्यदेहांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
विश्वेश्वरार्चनविलोकनसक्तचित्तांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
शुद्धाविमुक्तपतिपूजनसक्तचित्तांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
आनन्दभैरवविलोकनपूतचित्तांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
श्रीमुक्तिमण्टपविलोकनसक्तचित्तांस्तांस्त्वंत्रिणेत्रनिलयान्यमपश्यपश्य । त .... मि ॥
भक्त्याकथञ्चिदनुवासरमन्नपूर्णापादारविन्दभजनेप्रवणाश्शिवास्ते । त .... मि ॥
श्रीडुण्डिराजचरणार्चनसक्तचित्तान्पादारविन्दभजनेप्रवणाश्शिवास्ते । त .... मि ॥
वीरेश्वरार्चनविलोकनपूतचित्तान्पादारविन्दभजनेप्रवणाश्शिवास्ते । त .... मि ॥
श्रीकालभैरवविलोकनसक्तचित्तान्पादारविन्दभजनेप्रवणाश्शिवास्ते । त .... मि ॥
ओङ्कारनायकविलोकनसक्तचित्तान्पादारविन्दभजनेप्रवणाश्शिवास्ते । त .... मि ॥
दूतास्त्वतिकठिनाः खलु शिक्षणीयास्ते धर्मबुद्धिरहिता दुरितप्रवृत्ताः ।

तद्योगतस्तव विशेषत एव धर्मो नाशं प्रयास्यति स तेन शिवापराधः ॥ ७० ॥

दूताश्चरन्ति यदि ते शिवमन्दिरेषु शैवेषु तत्सदनमार्गमहार्हदेशे ।

तर्हि प्रकुप्यति शिवोऽपि यमात एव ते तावदादरत एव निवारणीयाः ॥ ७१ ॥

ये शङ्करस्मरणमात्रविधूतपापास्तेशाम्भवास्तव यमान्वहमर्चनीयाः ।

तेषां गृहेषु न कदापि भटाः प्रयान्तु तद्गेहमार्गमपि ते न विशन्तु मोहात् ॥७२॥

ये लिङ्गपूजनरतास्सततं प्रहृष्टास्ते....नीयाः । तेषां गृहे....मोहात् ॥ ७३ ॥

उद्धूलनप्रभवपुण्यसमृद्धचित्तास्ते....नीयाः । तेषां गृहे....मोहात् ॥ ७४ ॥

ये बिल्वमूलशिवलिंगकृतप्रणामास्ते....नीयाः । तेषां गृहे....मोहात् ॥ ७५ ॥

ये बिल्वपत्रलवनाहतकण्टकाग्रास्ते....नीयाः । तेषां गृहे....मोहात् ॥ ७६ ॥

ये बिल्वपल्लवकृतोन्नतलिंगपूजास्ते....नीयाः । तेषां गृहे....मोहात् ॥ ७७ ॥

ये वै त्रिपुण्ड्ररुचिरामलफालभागास्ते....नीयाः । तेषां गृहे....मोहात् ॥ ७८ ॥

रुद्राक्षभूषणविराजितकण्ठदेशास्ते....नीयाः । तेषां गृहे....मोहात् ॥ ७९ ॥

ये बिल्वपूजनमहोत्सवलोलचित्तास्ते....नीयाः । तेषां गृहे....मोहात् ॥ ८० ॥

ये शाम्भवार्चनसमार्जितवित्तभारास्ते....नीयाः । तेषां गृहे....मोहात् ॥ ८१ ॥

ये शङ्करस्मरणविस्मृतकार्यचेष्टास्ते....नीयाः । तेषां गृहे....मोहात् ॥ ८२ ॥

ये शांगलिंगनिहितेक्षणरश्मिजालास्ते....नीयाः । तेषां गृहे....मोहात् ॥ ८३ ॥

ये चन्द्रचूडकलनामृतपानलोलास्ते शाम्भवास्तव यमान्वहमर्चनीयाः ।

तेषां गृहेषु न कदापि भटाः प्रयान्तु तद्गेहमार्गमपि ते न विशन्तु मोहात्॥८४॥

धन्या शङ्करनामधेयसुसुधाधाराधरासारभू-

जिह्वाजिह्मगराजराजविनुता धन्येति मान्येति च ।

सा जिह्वा बहुजन्मसञ्चितचिराभ्यस्तातिपुण्यार्जिता

सेयं पुण्यसुधानिधिः खलु स संलभ्यशिवानुग्रहात् ॥ ८५ ॥

इति श्रीशिवरहस्ये महेतिहासे हराख्ये तृतीयांशे शिवभक्तमहिमकथनं नाम त्रिंशोऽध्यायः ॥ ३० ॥

---

शिवभक्तमहिमकथनं नाम एकत्रिंशोऽध्यायः.

व्यासः—

इत्युक्तं तद्वचश्श्रुत्वा प्रहृष्टास्ते सुरास्तदा। विश्वस्य तं पुनर्नत्वा कृताञ्जलिपुटा जगुः॥

देवाः—

श्रीनन्दिकेश्वर स्वामिञ्छिन्नविज्ञानसागर। अनेन किं कृतं पुण्यं तद्रोप्यमपि संवद॥

नन्दिकेश्वरः—

तत्पुण्यश्रवणादेव भवतां विस्मयो भवेत्। तत्त्वज्ञानविहीनानां सर्वमाश्चर्यसाधनम्॥
शिवपूजाप्रभावाब्धिबिन्दुज्ञानविवर्जिताः। भवन्तस्तापसास्सिद्धा गन्धर्वाः किन्नरा अपि
शिवप्रभावरूपाणां रत्नानां सागरश्शिवः। अतश्शिवो विजानाति स्वतत्त्वं नेतरो जनः
अस्माभिरपि तत्तत्त्वं लेशतस्तत्प्रसादतः। ज्ञातं कथञ्चिदन्येन कथं ज्ञेयं सुरादिभिः॥
अपूर्वमणयो येन सञ्चितास्स्वगृहे स्वतः। स तत्तत्त्वविदन्यस्तु तत्तत्त्वं वेद किं सुराः॥
यस्य रत्नस्य यन्मूल्यं तत्तेन ज्ञायते परम्। रत्नतत्त्वं विजानाति स तु रत्नपरीक्षकः॥
न च रत्नपरीक्षायां सर्वे दक्षास्स्वभावतः। दाक्षायणीवल्लभस्तु नित्यस्सर्वज्ञ एव हि॥
स तावन्नित्यसर्वज्ञशिरोमणिरिति श्रुतः। शूलपाणिस्ततस्सोऽयं तत्तत्त्वं वेद वस्तुतः॥
रत्नेषु च विचित्रेषु तेषु द्वित्राणि कानिचित्। रत्नानि तान्यमूल्यानि ज्ञानिदेयानि नामराः॥
शिवधर्मात्मकं रत्नं गोपनीयं विशेषतः। अतिभक्ताय दातव्यं नाभक्ताय कदाचन॥
अत्यल्पस्य रसस्यापि स्पर्शादेव कथञ्चन। लोहाचलस्सुवर्णत्वं प्राप्नोतीत्यवधारितम्॥
अग्निलेशेन तूलादिभस्मसाज्जायते क्षणात्। अत्यल्पेनौषधेनापि महाव्याधिलयो भवेत्
सूक्ष्मासिरप्यंगमध्येप्रविष्टोंगविनाशकः। विषमप्यल्पमेवांगे युक्तं देहविनाशकम्॥
तथैव शिवधर्मोऽपि सूक्ष्मः पापाद्रिनाशकः। पुण्यसम्पत्समृद्धिं च स करोति न संशयः॥
धर्माणामुत्तमो धर्मश्शिवधर्मस्सनातनः। सर्वोत्तमोत्तमत्वेन यथा गीतस्सदाशिवः॥
यथा साम्बो महादेवस्सर्वदेवशिखामणिः। तथायं शिवधर्मोऽपि सर्वधर्मशिरोमणिः॥
शिवधर्मात्परो धर्मो नास्ति न श्रूयतेपि च। सत्यमेतत्पुनस्सत्यमुद्धृत्य भुजमुच्यते॥
शिवधर्मान्यधर्मेषु धर्माभासत्वनिश्चयात्। तद्धर्माचरणात्किं वा फलं सम्भावितं सुराः॥
शिवधर्माननिज्ञाय धर्माभासरता नराः। कुर्वन्तु तान्विमोहेन न तेभ्यः फलमश्नुते॥
रत्नभ्रमेण स्फटिकं काचं गृह्णाति यो नरः। स ते न रत्नाभरणधारणोत्पन्नधर्मवान्॥

